एष हि देवः प्रदिशोऽनु सर्वाः
पूर्वो हि जातः स उ गर्भे अन्तः ।
स विजायमानः स जनिष्यमाणः
प्रत्यङ्मुखास्तिष्ठति विश्वतोमुखः ॥ १३ ॥

**धी.ती.–** ॥ पूर्वं मुमुक्षुज्ञेयतयोक्तः परमात्मा सर्वत्राप्यस्तीत्याह ॥ एष हि देव इति ॥ एषः पूर्वोक्तो देवः क्रीडादिगुणविशिष्टः परमात्मा सर्वाः प्रदिशो दिशश्च अनु अनुसृत्य पूर्वः पुरातनः प्राच्यादिदिक्शब्दवाच्योऽव्याकृताकाशापेक्षया पूर्वो जातः पूर्वमभिव्यक्त इत्यर्थः । स एव ब्रह्माण्डान्तः सर्वेषां गर्भे चान्तर्जातः सुरनरतिर्यगाद्यन्तर्नियामकतया पूर्वमभिव्यक्तः । स विजायमानो विविधतयेदानीमभिव्यक्तः । 'ब्रह्मणि ब्रह्मरूपोऽसौ शिवरूपी शिवे स्थित' इत्यादिनानारूपत्ववचनात् । स जनिष्यमाण उत्तरत्रोत्पत्स्यमानब्रह्मादिविविधजीवान्तर्यामितयाऽभिव्यज्यमानश्च । स उ स एव हि प्रसिद्धम् । 'य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मानं वेद । यस्यात्मा शरीरम् । य आत्मानमन्तरो यमयत्येष त आत्मान्तर्याम्यमृत' इति । यो विज्ञाने तिष्ठन्निति च श्रुतेः । सर्वगश्चेत्परमात्मा सर्वैर्दृश्येतेत्यत आह ॥ **प्रत्यङ्मुखा** इति । स्वयं विश्वतोमुखोऽपि विश्वदृगपि जनानां प्रत्यङ्मुखा अदृश्यस्तिष्ठति । प्रत्यङ्मुखा इति सुपो जश्प्रत्ययः सुपां सुबिति सूत्रात् । अनया ऋचा भूतभविष्यद्वर्तमानकालीनसर्वदेशस्थत्वब्रह्माद्यन्तर्यामित्वमदृश्यत्वादिकमुक्तम् ॥

**सा.आ.–** ॥ एष देवः परमेश्वरः । सर्वाः प्रदिशः । अनु अनुप्रविष्टः । पूर्वो जातोऽयं पदार्थः स देव एव । गर्भेऽन्तः यः

प्रत्यङ्मुख ऊर्ध्वमुखस्तिष्ठति । स उ स देव एव विजायमानः स देवो जनिष्यमाणः स देवो विश्वतोमुख इत्यस्य एष देव इति पूर्वेणान्वयः । अत्र जातादिष्वोतत्वादेव जातादिव्यपदेशो न तु जनिमत्त्वात् । स्पष्टीभविष्यति चेदमुपरिष्टात् ।। १३ ।।

**विश्वतश्चक्षुरुत विश्वतोमुखो**
**विश्वतोबाहुरुत विश्वतस्पात् ।**
**सं बाहुभ्यां नमति सं पतत्रै-**
**र्द्यावापृथिवी जनयन्देव एकः ।। १४ ।।**

धी.ती.– ।। प्रागुक्तं विश्वरूपत्वं किञ्चिद्विशदयति ।। **विश्वतश्चक्षु-रिति** । विश्वतः सर्वत्र विद्यमानं चक्षुर्नयनं ज्ञानं वा यस्य स तथोक्तः । विश्वदर्शीति वा । उत अपि च । विश्वतोमुखो विश्वतो बाहुश्च सर्वत्र विद्यमानमुखबाह्वादिमान् । विश्वतोहस्त इति याजुषपाठे हस्तः सर्वत्र विद्यमानविस्तृतकरः । प्रकोष्टे विस्तृतकरे हस्त इति कोशात् । उत अपि च । विश्वतस्पात्सर्वत्र विद्यामानपादः । अनन्तशीर्षोऽनन्तबाहुरिति श्रुतेः । 'सर्वतः पाणिपादं तत्सर्वतोऽक्षि-शिरोमुखमि'ति गीतावचनाच्च । स विश्वरूपो हरिर्द्यावापृथिवी प्रसिद्धे तदुपलक्षितचतुर्दशभुवनानि तत्स्थप्राणिनश्च जनयन्नुत्पादयन्नेकः समा-भ्यधिकरहितो मुख्यश्च देवः परमात्मा सं सम्यक् बाहुभ्यां दोर्भ्यां पतत्रैः पक्षैश्च सन्नमति । अन्तर्णितणिच् । वशीकरोतीत्यर्थः । विश्वतश्चक्षुरिति ऋङ्मन्त्रसमाख्यानाच्च । यद्वा स्वबाहुभ्यां पतत्रै-र्गरुडपक्षैश्च सन्नमति वशीकरोतीति यावत् । अनया ऋचा विश्वरूपत्वं सर्वनियन्तृत्वं च भगवतः प्रतिपादितम् ।।

सा.आ.– विश्वतोमुखं देवमलौकिकरूपान्तरेण विशिनष्टि ।। विश्वत इत्यादिना । यो विश्वतोमुखो देवः पूर्वोक्तः स विश्वतश्चक्षुरिति योजना । सर्वत्रौतत्वादेव सर्वेषां चक्षुरादीनि तस्यैव । विश्वरूपाभिप्रायं वा । बाहुभ्यां बाहुसदृशाभ्यां पुण्यपापाभ्यां सर्वं जीवजातं सन्नमति सन्नमयति । पतत्रैः पतनशीलैः पञ्चमहाभूतैर्द्यावापृथिवी ऊर्ध्वाधोलोकौ जनयन्देव एक एव ।। १४ ।।

**वेनस्तत्पश्यन्विश्व भुवनानि**
**विद्वान्यत्र विश्वं भवत्येकनीळम् ।**
**यस्मिन्निद ँसं च वि चैक ँस**
**ओतः प्रोतश्च विभुः प्रजासु ।। १५ ।।**

धी.ती.– ।। उक्तार्थे श्रद्धातिशयजननायाख्यायिकारूपान्मन्त्रानाह ।। वेन इत्यादि ।। यत्र यस्मिन्परमात्मनि विश्वं समस्तं प्रपञ्चादिकमेकनीडमेकाश्रयं संसारे प्रलये च भवति तद्ब्रह्म । विश्वा भुवनानि विद्वानपरोक्षीकुर्वन्ज्ञानी वेनो विगतमेनः पापं यस्य सः । विगतपापो भवति । वीत्युपसर्गेकारलोपश्छान्दसः । यद्वा विद्वान्वेनो वेनाख्यो गन्धर्वः । यथा 'पुष्करपलाश आपो न श्लिष्यन्ते एवमेवंविदि पापं कर्म न श्लिष्यत' इत्यादिश्रुतिसमाख्यानात् । तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशादिति सूत्राच्च । यस्मिन्परमात्मनीदं पूर्वं प्रकृतं विश्वं सं च विद्यमानमपि विचैकम् । भावप्रधानौ निर्देशः । विगतैक्यं सर्वप्राणिजातं भवति स विभुः प्रजासु प्राणिष्वोतः प्रोतश्चान्तर्बहिर्व्याप्तः । अनया ऋचा भगवतः सर्वाश्रयत्वं ज्ञानिनः सर्वपापाश्लेषः सर्वप्रजास्वन्तर्बहिश्च विद्यमानत्वं चोच्यते ।।

**सा.आ.–** उक्तार्थे श्रद्धां जनयितुं गन्धर्ववृत्तान्तमाह ।। **वेन इति** ।। विश्वा भुवनानि विद्वान् । तत् ब्रह्म । पश्यन्सन् वेनो नाम गन्धर्वः । तत् विभु गुहासु निहितं शिष्येभ्यः प्रवोचे प्रोवाचेति योजना । यत्प्रोवाच तदाह।। यत्रेति ।। यत्र परमेश्वरे विश्वमेकनीळं एकनीडं भवति । यस्मिन्निदं सर्वं प्रलये समेति सृष्टौ वि च विविधं च भवति । स परमेश्वरः सर्वप्रजासु ओतः प्रोतश्च इत्येवं प्रवोचेत्यन्वयः ।। १५ ।।

**प्र तद्वोचे अमृतं नु विद्वान्**
**गन्धर्वो नाम निहितं गुहासु ।।**
**त्रीणि पदा निहिता गुहासु**
**यस्तद्वेद सवितुः पिताऽसत् ।। १६ ।।**

**स नो बन्धुर्जनिता स विधाता**
**धामानि वेद भुवनानि विश्वा ।।**
**यत्र देवा अमृतमानशाना-**
**स्तृतीये धामान्यभ्यैरयन्त ।। १७ ।।**

**परि द्यावापृथिवी यन्ति सद्यः**
**परि लोकान्परि दिशः परि सुवः ।।**

**धी.ती.–** ।। तदेवोत्तरवाक्येन विव्रियते ।। **प्र तद्वोच इति** ।। तत्पूर्वोक्तममृतं गुहासु सर्वप्राणिहृदयगुहासु निहितं स्थितं ब्रह्म । विद्वान्गन्धर्वो विश्वावसुर्वेनाख्यो वा शिष्येभ्यस्तद्ब्रह्म प्रोचे नु प्राह किल । गुहासु ब्रह्माण्डान्तस्त्रीणि पदा पदानि स्वरूपाणि । अक्षया-भयामृताख्यानि श्वेतद्वीपानन्तासनवैकुण्ठाख्यस्थानेषु निहितानि ।

यस्तद्वेद सवितुः सर्वोत्पादकस्य हरेः, हृदयगुहास्विति बहुवचनाज्जीवहृदयगुहासु त्रीणि पदानि विश्वतैजसप्राज्ञाख्यानि प्रादेशमध्येश-मूलेशाख्यानि वा रूपाणि निहितानि यस्तद्वेद सवितुः सर्वोत्पादकस्य हरेः पिता स्वरूपजनजनकोऽसत्स्यात् । अनया सर्वज्ञानकहरेरपि व्यक्तीकरणात्तदुपदेष्टा तत्पितेत्युपचर्यते ।। १६ ।।

न केवलं तत्पिता किन्त्वस्माकमपीत्याह ।। **स नो बन्धुरित्यादिना** ।। स ब्रह्मज्ञानोपदेष्टा नोऽस्माकं बन्धुरिव बन्धुर्हितोपदेष्टा । जनिता उपदेशेन ज्ञानोत्पादकः । स विधाता धारणपोषणादिकर्ता । स विश्वा विश्वानि समस्तानि श्वेतद्वीपानन्तासनवैकुण्ठादीनि धामानि तद्गतरूपाणि च वेद जानातीत्यर्थः ।। **यत्र देवा इति** ।। यत्र यस्मिन्वैकुण्ठाख्ये तृतीये स्वर्गे वा धामानि दीर्घश्छान्दसः धाम्नि । देवाः पूर्वमुक्ताः स्वर्गस्था वा । अमृतमानशाना अमृतमविनाशि-स्वरूपानन्दं मुक्तोपभोग्यं सत्त्वात्मकं वा भुञ्जाना अमृताशिनो वा । अभ्यैरयन्त स्वावरान्प्रेरयामासुः । 'मुक्तस्वकीयावरयन्तृता स्यान्मुक्तावपि ब्रह्मपुरःसराणाम्' इत्युक्तेः । अभ्यैयन्त इति पाठे प्रेरयन्त इत्यर्थः ।। १७ ।।

द्यावापृथिवी लोकद्वयं सद्यः परियन्ति, सुवः स्वर्लोकं परियन्ति प्रथमं प्राप्नुवन्ति । लोकान्भुवनादींश्च परियन्ति । दिशः प्राच्याद्याश्च परियन्ति । सुवः स्वर्लोकं परियन्ति । भूरादिस्थत्वेन भगवज्ज्ञानिनो भूरादिलोकप्राप्तिर्भवतीति भावः ।।

**सा.आ.–** अमृतं मोक्षं च विद्वान् । गन्धर्वस्येदं विशेषणम् । यत्र त्रीणि पदा पदानि स्वरूपाणि । गुहासु श्वेतद्वीपानन्तासनवैकुण्ठेषु

निहिता निहितानि । त्रिपादस्यामृतं दिवीति श्रुतेः । तत् यो वेद सः । सवितुः सूत इति सविता पिता जगतः पिता परमेश्वरस्तस्यापि पिता असत् भवति। यद्वा तदित्यस्येदं विशेषणम् । असत् कारणं कस्यापि बुद्धौ पूर्वमसदिति वा । तथा च ऋङ्मन्त्रः 'कविर्यः पुत्रः स इमा चिकेता यस्ता विजानात्स पितुष्पितासत्' इति । परमेश्वरपितृत्वं नाम तत्प्रकाशितत्वम् ।। १६ ।। स परमेश्वरो नो बन्धुर्जनिता जनयिता विधाता पोषयिता । विश्वा भुवनानि तद्गतधामानि च वेद। यत्र यदीयवैकुण्ठे द्यावापृथिव्यपेक्षया श्वेतद्वीपानन्तासनापेक्षया वा तृतीये स्थाने गता देवा अमृतमानशानाः सुधां पिबन्तः । लिटः कानचि रूपम् । धामानि दिव्यस्थानानि । अभ्यैरयन्त प्रापुः । तत्र हि अरश्च ण्यश्च सुधासमुद्रौ छान्दोग्यादौ प्रसिद्धौ । यत्रेत्यस्य स नो बन्धुरिति पूर्वेणान्वयः । स्वर्गलोक इत्यर्थे तु यत्रेत्यस्यानन्वयः । अरश्च ह वै ण्यश्चार्णवौ ब्रह्मलोके तृतीयस्यामितो दिवीति छन्दोगश्रुतिसमाख्याविरोधश्च ।। १७ ।। इदानीन्तना अपि ब्रह्मज्ञानिनो देवादयः सद्यो द्यावापृथिवी परियन्ति । लोकान् उपरितनलोकान्परियन्तीत्याद्यन्वयः ।

**ऋतस्य तन्तुं विततं विवृत्य**
**तदपश्यत्तदभवत्प्रजासु ।। १८ ।।**

**परीत्य लोकान्परीत्य भूतानि**
**परीत्य सर्वाः प्रदिशो दिशश्च ।।**
**प्रजापतिः प्रथमजा ऋतस्यात्मनाऽऽत्मान-**
**मभिसम्बभूव ।। १९ ।।**

**धी.ती.**– ।। ऋतस्य तन्तुमिति ।। ऋतस्य यथार्थज्ञानरूपस्य हरेः प्रथमजा प्रथमजः पूर्वोत्पन्नः प्रजापतिश्चतुर्मुख ऋतस्य तन्तुं हरेरवताररूपं पारम्पर्यं प्रजासु विततं व्याप्तं विवृत्यान्विष्य तद्ब्रह्म स्वकारणमपश्यत् साक्षात्कृतवान् । तदनु तदभवत्तद्ब्रह्म प्राप्तवान् ।। पुनः स लोकान्भुवनादीन् 'मुक्तस्वकीयावरयन्तृता स्यान्मुक्तावपि ब्रह्मपुरः सराणामित्युक्तेः । तदभिमानिनश्च परीत्य सृष्ट्वा भूतानि पञ्चमहाभूतानि तदभिमानिनश्च सृष्टिकाले परीत्य सृष्ट्वा ज्ञात्वा वा दिशः प्राच्याद्याः प्रदिश आग्नेय्याद्याः । चशब्दात्तदभिमानिनश्च सृष्ट्वा स्थितिकाले परीत्य रक्षित्वा । आत्मना परमात्मना मनसा वाऽऽत्मानं परमात्मानमभिसम्बभूव प्राप्तः । व्यत्ययात् परस्मैपदम् । सम्बभूवेत्यर्थः । भू प्राप्ताविति वचनात् । सर्वतः सम्यक् प्राप्तवानित्यर्थः । अनुभूतवानिति वा ।।

**सा.आ.**– ब्रह्मज्ञानेन देवातिरिक्तस्य कस्यचिन्मुक्तिरभून्न वेति संशयेऽभूदित्याह ।। ऋतस्येति ।। ऋतस्य ब्रह्मणो विततं विस्तृतं तन्तुं प्रजातन्तुं विवृत्य निश्चित्य । सर्वस्रष्टृत्वं ब्रह्मणो निश्चित्येति फलितम् । प्रजासु कश्चिज्जीवः तत् ब्रह्म स्वयमपश्यत् । ततस्तद-भवत् । ब्रह्म वेद ब्रह्मैव भवतीति श्रुतेः । परीत्येत्यादेः पूर्वेणान्वयः। परीत्येत्यस्य गत्वेत्यर्थः । परेणान्वयो व्याप्येत्यर्थः इत्यन्ये । ऋतस्य नारायणस्य । प्रथमजाः प्रथमजः । नारायणा-द्ब्रह्मा जायत इति श्रुतेः । हिरण्यगर्भ आत्मना नारायणप्रसादेन । आत्मानं नारायणमभिसम्बभूव प्राप्तवान् ।। १८,१९ ।।

**सदसस्पतिमद्भुतं प्रियमिन्द्रस्य काम्यम् ।**
**सनिं मेधामयासिषम् ।। २० ।।**

धी.ती.– ।। सदसस्पतिमिति । सदसः सभायाः पतिं नायकं सभास्तारम् । उपेन्द्ररूपमिति यावत् । अद्भुतं त्रिविक्रमादिविचित्र-व्यापारकरणादाश्चर्यमिन्द्रस्य प्रियमनिमित्तोपकारिणं काम्यमपेक्षितं कामितार्थप्रदं वा । सनिं कर्मफलदातारं जीवाद्भिन्नं वा । वन षण सम्भक्ताविति धातोः । अन्नादि विभज्य दातारं वा । अन्नदाता भवेदन्नमित्यादिवामनपुराणवचनात् । मेधां धारणावतीं धियमयासिष-मेतादृशीं धियमहं यत्प्रसादादवाप्तवांस्तम् । शरणमेमीति शेषः । तदेवमापाततोऽपि ब्रह्मविद्या प्रतिपादिता ।।

सा.आ.– सदसस्पतिं देवसदसः पतिम् । अद्भुतमाश्चर्यरूपम् । इन्द्रस्य प्रियं विष्णुम् । चिन्तयित्वेति शेषः । काम्यं विषयजातं सनिमर्थलाभं मेधां चायासिषं लब्धवान् । सनिमित्यस्य फलदातार-मित्यर्थे सदसम्पतिमित्यस्य विशेषणम् । इन्द्रप्रियत्वं नाहमिन्द्राणीति श्रुतौ विष्णोः प्रसिद्धम् । वेदद्रष्टुः कस्यचिदृषेरियमुक्तिः ।। २० ।।

**उद्दीप्यस्व जातवेदोऽपघ्नन्निर्ऋतिं मम ।**
**पशूꣳश्च मह्यमावह जीवनं च दिशो दिश ।। २१ ।।**

धी.ती.– अथ ब्रह्मप्राप्तिसाधनं सोपाधिकं ब्रह्मोपासनमाह ।। उद्दीप्यस्वेति । हे जातवेदः जातं सर्वं वेत्तीति, जाते सर्वत्र विद्यत इति वा जातवेदाः अग्निगतः परशुरामः । ममानिष्टकारिणीं पाप-मानिनीं निर्ऋतिं राक्षसीमुपघ्नन्विनाशयन् उद्दीप्यस्व दह । ततो मह्यं पशून्द्विपाच्चतुष्पादादिरूपान् जीवनं दीर्घायुषमन्नपानादिलक्षणं जीवनोप-योगि वा । आवह पूरय । आङ्पूर्वाद्वह प्रपूरण इत्यस्माद्धातोर्लोट् । दिशश्च सुखनिवासदेशाश्च दिश देहि । अनेन मन्त्रेणेष्टप्रार्थना कृता ।

सा.आ.– जातवेदसं तदधिष्ठितं परमेश्वरं च प्रतीष्टं प्रार्थयते ।। उद्दीप्यस्वेति ।। जातं सर्वं वेदेति व्युत्पत्त्या जातवेदश्शब्दो ब्रह्मपरोऽग्निपरश्च । हे जातवेदः ! ममानिष्टकारिर्णी निर्ऋतिं पापदेवतामपघ्नन्नाशयन्सन्नुद्दीप्यस्व दीप्तिमान्भव । मह्यं पशून् जीवनं चावह देहि । दिशश्च सुप्रसन्ना मह्यं दिश देहि ।। २१ ।।

**मा ने हिꣳ सीज्जातवेदो गामश्वं पुरुषं जगत् ।**
**अबिभ्रदग्न आगहि श्रिया मा परिपातय ।। २२ ।।**

धी.ती.– ।। अनिष्ठनिवृत्तिमर्थयते ।। **मा नो हिंसीदिति** । हे जातवेदो नो गां धेनुं तदुपलक्षितमहिष्यादिकमश्वं तदुपलक्षितं हस्त्युष्ट्रादिकं पुरुषं पुत्रभृत्यादिकं जगत् । उक्तातिरिक्तं बन्धुजनादिकं च । मा हिंसीन्मा विनाशय । अग्ने अग्प्रत्वादिनाऽग्निशब्दवाच्याग्न्यन्तर्यामिन् हरे मदीयं आग इति शेषः । अबिभ्रत् मदीयमपराधादिकं मनस्यधारयन्मद्रक्षणाय मां प्रत्यागहि आगच्छ । आगत्य च मां श्रिया परिपातय परितः प्रापय । सम्पदादिकं कुर्विति यावत् ।

सा.आ.– हे जातवेदः । नोऽस्माकं गामश्वं पुरुषं जगत् क्षेत्रादिकं मा हिंसीत् । निर्ऋतिरिति शेषः । अबिभ्रत् अपराधं मनस्यधारयन् । आगहि आगच्छ । श्रीर्मां प्रति परिपतति । तया परिपातय । गतिबुद्धीति नियमात् प्रयोज्यकर्त्र्याश्रयो न कर्मत्वम् ।। २२ ।।

**पुरुषस्य विद्म सहस्राक्षस्य महादेवस्य धीमहि ।।**
**तन्नो रुद्रः प्रचोदयात् ।। २३ ।।**

धी.ती.– ।। इतः परं गायत्रीद्वयेन रुद्रान्तर्यामिणं भगवन्तमर्थयते ।। **पुरुषस्येति** । पुरुषस्य सहस्राक्षस्य सहस्रशीर्षा पुरुष

इत्युक्तविराड्रूपस्य सहस्राक्षस्यानन्ताक्षस्य । अनन्ताक्षोऽनन्तशीर्ष इति श्रुतिसमाख्यया सहस्रशब्दोऽनन्तपरः । रूपमिति शेषः । पुरुषस्येति कर्मणि षष्ठी वा । पुरुषस्य पुरुषं तद्रूपं विद्म जानीमहि लभेमहीति वा । विद ज्ञाने विद्लृ लाभ इति च धातोः । महादेवस्य महान्क्रीडादिगुणविशिष्टत्वान्महत्त्वाद्वा महादेवशब्दितस्य महादेवान्तर्गतस्य स्वरूपं धीमहि ध्यायेम । तत्तस्मिन्ध्याने रुद्रो रुजं द्रावयतीति रुद्रशब्दवाच्यो भगवान्नोऽस्माकं मनः प्रचोदयात्प्रेरयेत् । सहस्राक्षत्वादिनिरवकाशलिङ्गात्पुरुषशब्दाच्च पुरुषसूक्तसमाख्यानाच्च रुजं द्रावयतीति वचनोक्तमहायोगविद्वद्रूढिभ्यां च भगवत्परत्वमवसीयते ॥

**सा.आ.–** इत ऊर्ध्वं तेषु तेषु देशेषु श्रुतिपाठा अत्यन्तविलक्षणाः । तत्र द्रविडानां सहस्राक्षरुद्रवक्रतुण्डगरुडकात्यायनीनारायणानां षण्णां गायत्र्यः षडेव । आन्ध्राणां द्वादश । तत्रान्ध्रसम्ब्रदायस्यैव महाराष्ट्रैरादृतत्वात्तदनुसृत्य व्याख्यास्यामः । पुरुषस्य पुरुषसूक्तप्रतिपाद्यस्य महाविष्णोः सहस्रशीर्षा पुरुषः, अव्यक्तात्पुरुष इत्यादौ पुरुषशब्दस्य सहस्राक्षत्वस्य च तत्रैव प्रसिद्धेः – स्वरूपमिति शेषः । विद्म जानीमः । महांश्चासौ देवश्च महादेवः तस्य । स्वरूपमिति शेषः । तत्तस्मिन्ध्याने तस्माद्ध्यानादिति वा । प्रचोदयात् प्रचोदयेत् । नोऽस्माकं बुद्धिम् । सत्पथ इति शेषः । एवमग्रेऽपि । नोऽस्मानिति वा । रुद्रशब्दो महाविष्णुपरः । यो देवानां नामधा एक एवेति श्रुतेः । रुद्ररूपी जनार्दन इति स्मृतेश्च । यद्वा रुद्रो द्विविधः । एको नारायणांशस्तमोगुणाधिष्ठितोऽपरोऽहङ्काराभिमानी । आद्य ईश्वर एव । क्रमेण द्वावेतौ गायत्र्योर्निर्दिष्टौ ॥२३॥

**तत्पुरुषाय विद्महे महादेवाय धीमहि ॥**
**तन्नो रुद्रः प्रचोदयात् ॥ २४ ॥**

**धी.ती.–** ।। तत्पुरुषायेति ।। तस्य पुरुषस्तत्पुरुषः, तेन पुरु बहुधा सूत इति वा तत्पुरुषः स सर्वत्रोत्तरत्र । द्वितीयार्थे चतुर्थी । तत्पुरुषं महादेवं जानीमो ध्यायेम च । तत्तस्मिन्ध्याने रुद्रो रुद्रान्तर्गतो हरिर्नो मनः प्रचोदयात्प्रेरयेत् । 'ब्रह्मणि ब्रह्मरूपोऽसौ शिवरूपी शिवे स्थित' इति, 'विष्णुरात्मा भगवतो भवस्यामिततेजस' इति भारतवचनाच्च ।।

**सा.आ.–** स चासौ पुरुषश्च तत्पुरुषः । चतुर्थी द्वितीयार्थे ।। एवमग्रेऽपि । रुद्रादौ तत्पुरुष एव प्रयुज्यते न तु केवलः पुरुषशब्दः ।। २४ ।।

**तत्पुरुषाय विद्महे वक्रतुण्डाय धीमहि ।।**
**तन्नो दन्तिः प्रचोदयात् ।। २५ ।।**

**धी.ती.–** ।। तत्पुरुषायेति । स चासौ पुरुषस्तत्पुरुषः सहस्रशीर्षा पुरुष इत्युक्तस्तं विद्महे । वयमिति शेषः । वक्रतुण्डाय रत्नकलशाहरणार्थं भारतलेखनाय वा वक्रीभूतं तुण्डं मुखं यस्य स तथोक्तस्तं धीमहि ध्यायेम । यद्वा वक्राणि विषमाण्येकोनविंशति-सङ्ख्याकानि तुण्डानि मुखानि यस्य तं विनायकान्तर्गतं विश्वम्भरं धीमहि ध्यायेम । सप्ताङ्ग एकोनविंशतिमुख इति तद्भाष्याच्च । दन्तिर्दन्ती । विश्वतैजसयोर्गजमुखत्वात् । नोऽस्मांस्तत्तस्मिन्ध्याने नो मनः प्रचोदयात्प्रेरयेदित्यर्थः ।

**सा.आ.–** ।। वक्रं तुण्डं शुण्डादण्डो यस्य सः ।। २५ ।।

**तत्पुरुषाय विद्महे चक्रतुण्डाय धीमहि ।।**
**तन्नो नन्दिः प्रचोतयात् ।। २६ ।।**

**धी.ती.**– ।। **तत्पुरुषायेति** । प्रसिद्धपुरुषाय चक्रतुण्डाय चक्रवद्वर्तुलतुण्डाय सर्वत्र चङ्क्रम्यमाणतुण्डाय वा विद्महे जानीमो धीमहि ध्यायेम च । तस्मिन्ध्याने नन्दिर्नन्दीश्वरस्तदन्तर्गतो हृष्टः समृद्धो भगवांस्तच्छब्दवाच्यो नोऽस्मान्प्रचोदयात् । गतम् । नदि हर्षे नदि समृद्धाविति धातोर्वा भावे कप्रत्यये नन्दस्तदस्यास्तीति नन्दी स एव नन्दिः ह्रस्वश्छान्दसः ।।

**सा.आ.**– चक्राकारं तुण्डं यस्य सः ।। २६ ।।

**तत्पुरुषाय विद्महे महासेनाय धीमहि ।।**
**तन्नः षण्मुखः प्रचोदयात् ।। २७ ।।**

**धी.ती.**– ।। षण्मुखनामकभगवन्तमर्थयते ।। **तत्पुरुषायेति** । महती देवसेना यस्य तं षण्मुखं तं महासेनं देवसेनापतिं धीमहि ध्यायेम । षट् ऐश्वर्यादिषड्गुणा मुखानि प्रधानान्यस्य सन्तीति षण्मुखनामा तदन्तर्गतो हरिर्नः प्रचोदयात् । गतम् ।।

**सा.आ.**– महती सेना यस्य सः ।। २७ ।।

**तत्पुरुषाय विद्महे सुपर्णपक्षाय धीमहि ।।**
**तन्नो गरुडः प्रचोदयात् ।। २८ ।।**

**धी.ती.**– ।। गरुडान्तर्गतं भगवन्तं प्रार्थयते ।। **तत्पुरुषायेति** ।। प्रसिद्धपुरुषं विद्महे जानीमः । सुपर्णपक्षाय तम् । सर्वत्र चतुर्थी द्वितीयार्थ इत्युक्तत्वात् । सुपर्णो गरुडः पक्षः सहायो यस्येति वा । पक्षः सहाय इति कोशात् । तं धीमहि ध्यायेम । गरुडो गरुद्भ्यां पक्षाभ्यां रोहतीति गरुत्पदोपपदात् रुह बीजजन्मनि प्रादुर्भाव

इत्यस्मादिगुपधज्ञाप्रीकिरः क इति कप्रत्ययः । गरुडान्तर्गतो हरिः । तत्तस्मिन्स्वध्याने प्रचोदयात् ।।

सा.आ.– सुवर्णवर्णौ पक्षौ यस्य सः ।। २८ ।।

**वेदात्मनाय विद्महे हिरण्यगर्भाय धीमहि ।।**
**तन्नो ब्रह्म प्रचोदयात् ।। २९ ।।**

धी.ती.– ।। हिरण्यगर्भान्तर्गतं विष्णुमभीष्टमर्थयते ।। **वेदात्मनायेति** । वेद आत्मनि यस्यासौ वेदात्मा तं वेदगर्भान्तर्यामिणं हरिं जानीमः । अन्तव्यत्ययश्छान्दसः । हिरण्यं सुवर्णात्मकमण्डमण्डमेव गर्भमुत्पत्तिस्थानं यस्यासौ तं वयं धीमहि । तद्ब्रह्म गुणपूर्णं ब्रह्मान्तर्गतं भगवद्रूपं नो मनः प्रचोदयात्स्वविषयं कुर्यात् । ब्रह्मणि ब्रह्मरूपोऽसावित्युक्तेः ।।

सा.आ.– ।। वेदात्मनाय वेदात्मने । अदन्तत्वं छान्दसम् ।।२९।।

**नारायणाय विद्महे वासुदेवाय धीमहि ।।**
**तन्नो विष्णुः प्रचोदयात् ।। ३० ।।**

धी.ती.– ।। इतः परं गायत्रीद्वयेन विष्णुनारसिंहावर्थयते ।। **नारायणायेति** । गुणपूर्णत्वादिना नारायपनामानं विद्महे । वासुदेवाय वासुदेवशब्दार्थ उक्तो गीताभाष्ये । आच्छादयति सर्वं, वासयति च स्वस्मिन्सर्वं, वसति च सर्वत्रेति वासुदेवः । 'छादयामि जगद्विश्वं भूत्वा सूर्य इवांशुभिः । सर्वभूताधिवासश्च वासुदेवस्ततोऽस्म्यहम्' इति वचनात् । वस आच्छादने इत्यत उण् । वस निवास इत्यतो वा ण्यन्तादुण् प्रत्यये वसतीति केवलाद्वासुः । स चासौ देवः

क्रीडादिगुणविशिष्टस्तं धीमहि । विष्णुः विष्लृ व्याप्तावित्यतो विश प्रवेशन इत्यतो वा क्नुप्रत्यये षत्वे च विष्णुः । सर्वव्यापित्व-प्रवेशित्वादेरिति गीताभाष्यात् । 'व्याप्ते मे रोदसी पार्थ कान्ति-श्चाभ्यधिका मम । अधिभूतनिवासश्च तेन विष्णुरहं स्मृत' इति तदुदाहृतमोक्षधर्मवचनाच्च । व्याप्तत्वप्रविष्टत्वाभ्यां विष्णुशब्दवाच्यः परमात्मा तन्नो मनः प्रचोदयात्स्वविषयकं कुर्यात् ।। ३० ।।

**वज्रनखाय विद्महे तीक्ष्णदँष्ट्राय धीमहि ।।**
**तन्नो नारसिंहः प्रचोदयात् ।। ३१ ।।**

**धी.ती.–** ।। वज्रनखाय वज्रवदप्रतिहतानि नखानि यस्य यं विद्महे । तीक्ष्णा दंष्ट्राः पार्श्वयोर्बहिर्निःसृता दन्ता यस्य तं धीमहि । नारसिंहो नरश्च सिंहश्च तयोः समाहारो नरसिंहः स एव नारसिंहः । प्रज्ञादित्वात्स्वार्थेऽण् । नरसम्बन्धित्वान्नारं शरीरादिकं नार इव सिंह इव नारसिंहस्तन्नोऽस्माकं ज्ञानं मनो वा स्वविषयं कुर्यात् ।।

**सा.आ.–** वज्रनखाय वज्रसदृशनखाय ।। ३१ ।।

**भास्कराय विद्महे महद्युतिकराय धीमहि ।।**
**तन्नो आदित्यः प्रचोदयात् ।। ३२ ।।**

**धी.ती.–** ।। आदित्यगायत्र्या तदन्तस्थं हरिमर्थयते ।। **भास्करा-येति** । भासो दीप्तयः करोतीत्यादित्यः । अदितेः सुतत्वात् । आदित्यस्त्वदितेः सुत इति शिक्षाभाष्यात् । आदित्यान्तर्गतो भगवांस्तन्मनः प्रचोदयात् ।।

**सा.आ.–** महद्युतिकराय महान्तो द्युतिरूपाः करा यस्य सः ।

उत्तरपदपरत्वाभावान्नात्वम् । उत्तरपदशब्दः समासचरमावयवे रूढः । छान्दसत्वान्नात्वम् । तन्नो आदित्यः । अत्रोत्वं छान्दसम् ॥३२॥

**वैश्वानराय विद्महे लालीलाय धीमहि ॥**
**तन्नो अग्निः प्रचोदयात् ॥ ३३ ॥**

**धी.ती.–** ॥ अग्न्यन्तर्गतं हरिं तद्गायत्र्या प्रार्थयते ॥ **वैश्वानरायेति** । विश्वानरसम्बन्धित्वाद्वैश्वानरो भगवान् । साधारणशब्दविशेषादिति सूत्रे वैश्वानरशब्दस्य भगवति समन्वयात् । अहं वैश्वानरो भूत्वेति गीतोक्तेश्च । तं विद्महे । लालीलाय लाऽऽदान इति धातोः । हविराद्यादानं लीला यस्य तं धीमहि । अङ्गमप्रधानं जगत् । वागाद्यङ्गं वा । तत्प्रेरयिता । अग्निरङ्गप्रणेतृत इतीशावास्यभाष्यात् । तन्नः प्रचोदयात् ॥

**सा.आ.–** ॥ लाली (तन्नाम्नी) जिह्वा अस्येति विग्रहः । पिच्छादित्वादिलच् । चञ्चलाय वा । तन्नो अग्निः । प्रकृत्यान्तरिति प्रकृतिभावः ॥ ३३ ॥

**कात्यायनाय विद्महे कन्यकुमारि धीमहि ॥**
**तन्नो दुर्गिः प्रचोदयात् ॥ ३४ ॥**

**धी.ती.–** ॥ दुर्गान्तर्गतं भगवन्तमर्थयते ॥ **कात्यायनायेति** । कात्यायन्यै । कतिं वस्त इति कात्यो रुद्रः स एवायनमाश्रयो यस्याः सा कात्यायनी तस्यै कात्यायन्यै । लिङ्गव्यत्ययश्छान्दसः । भगवत्पक्षे कात्यो नाम ऋषिस्तस्यायनमाश्रयस्तस्मै कात्यायनाय विद्महे । कन्या च सा कुमारी च कन्याकुमारी । ह्रस्वश्छान्दसः ।

कुत्सितमनिष्टं मारयतीति कुमारी तां धीमहि । तन्नो दुर्गिः प्रचोदयात् दुःखेनापि गन्तुमशक्या दुर्गा सैव दुर्गिः । आकारस्येकारश्छान्दसः प्रचोदयात् । गतम् ॥

सा.आ.– ॥ कात्यायनाय कात्यापत्न्यै । कुत्सितान्दैत्यान्मारयतीति कुमारी कन्या चासौ कुमारी चेति विग्रहः । दुर्गिः दुर्गा । अत्र सर्वत्र लिङ्गादिव्यत्ययश्छान्दसः ॥ ३४ ॥

**सहस्रपरमा देवी शतमूला शताङ्कुरा ॥**
**सर्वं हरतु मे पापं दूर्वा दुःस्वप्ननाशिनी ॥ ३५ ॥**

धी.ती.– ॥ इतः परं स्नानमूलाः क्रियाः सर्वा इति श्रुत्या सर्वकर्ममूलस्नानाङ्गदूर्वया सह शिरसि मृत्तिकाधारणार्थं तद्देवताप्रार्थनारूपान् मन्त्रानाह ॥ सहस्रपरमेत्यादिना । सहस्रपरमा सहस्रसङ्ख्याकाभ्यः पावित्र्यकारिद्रव्याभिमानिदेवताभ्यः परमा उत्तमा देवी क्रीडादिगुणविशिष्टा शतमूला शतसङ्ख्याकानि मूलान्यभिव्यञ्जकानि यस्याः सा शतमूला । शताङ्कुरा शतप्ररोहवती । दुर्वायाः शतमूलत्वाच्छताङ्कुरत्वात् । तद्देवतायास्तथा व्यपदेश औपचारिकः । यद्वा तद्देवता या भगवन्मूर्तिः । सहस्रपरमा सहस्राधिकसङ्ख्यावती । अयं वै हरयो दश च शतानि च सहस्राण्यनन्तानि चेति श्रुतेः । शतमूला शतसङ्ख्याकनारायणनरहर्यादिरूपाणां मूलाऽभिव्यञ्जिका । शताङ्कुरा नारायणादिशतमूर्तिरूपाङ्कुरवती मूलरूपा नारायणमूर्तिर्दुःस्वप्ननाशिनी दुष्टस्वप्नदर्शनप्रयुक्तानिष्टफलनाशिनी । दूर्वा दूरं वाति गच्छतीति दूर्वाशब्दवाच्या भगवन्मूर्तिः । आसीनो दूरं व्रजति शयनो याति सर्वश इति श्रुतेः । मे मम सर्वं पापं हरतु परिहरतु ॥

**सा.आ.–** दुःस्वप्ननाशिनी दूर्वादेवी मे सर्वं पापं हरत्विति सम्बन्धः । सहस्रसङ्ख्याकानि काण्डानि परमावधिभूतानि यस्याः सा । शतसङ्ख्याकानि मूलानि यस्याः सा । शताङ्कुरा बहुपल्लवा ॥ ३५ ॥

**काण्डात्काण्डात्प्ररोहन्ती परुषः परुषः परि ॥**
**एवा नो दूर्वे प्रतनु सहस्रेण शतेन च ॥ ३६ ॥**

**या शतेन प्रतनोषि सहस्रेण विरोहसि ॥**
**तस्यास्ते देवीष्टके विधेम हविषा वयम् ॥३७॥**

**धी.ती.–** ॥ इतः परं ऋग्द्वयं पूर्वोक्तदेवताविषयम् । दूर्वापक्षे । काण्डात्काण्डाद्दूर्वादण्डात्परुषः परुषः प्रतिपर्वतः परि उपरि उपरिष्टात्परितो वा प्ररोहन्ती जायमानैव । तेन शतेन सहस्रेण च मम सुकृतं प्रतनु विस्तारय । या त्वं शतेन प्रतनोषि विस्तारयसि सहस्रेणाङ्कुणादिना विरोहसि । अन्तर्णीतणिच् । विरोहयसि । एवंरूपायास्ते देवि इष्टके इष्टकर्त्रि दूर्वे इष्टकादेवते वा । ते हविषा हविरादिपूजासाधनद्रव्येण विधेम परिचर्यां कुर्मः । भगवन्मूर्तिपक्षे– काण्डात्काण्डात् प्ररोहन्तीत्यस्य काण्डात्काण्डात् प्रतिव्यूहरूपात्पुरुषः पुरुषः परि प्रतिकल्पं प्ररोहन्ती अभिव्यज्यमाना दूर्वाशब्दवाच्या भगवन्मूर्तिः । या त्वं मूलमूर्तिरूपा शतेन नारायणादिशतरूपेण प्रतनोषि स्वमूर्तिं विस्तारयसि सहस्रेण विश्वादिसहस्ररूपेण विरोहसि विशेषाकारेण प्रादुर्भावयसि तस्यास्ते देवि । विधेमेत्यादि प्राग्वत् ॥

**सा.आ.–** परुषः परि ग्रन्थिसमीपे । काण्डात्काण्डमाश्रित्य प्ररोहन्ती । काण्डं ग्रन्थिमध्यदण्डः । उभयत्र वीप्सायां द्वित्वम् । हे

दूर्वे । एवा वृद्धिशीला भूत्वा नोऽस्मान्सहस्रेण शतेन च पुत्रकलत्रादिना प्रतनु विस्तारय । या शतेन मूलेन प्रतनोषि विस्तृता भवसि सहस्रेण काण्डेन विरोहसि प्ररोहसि । इष्टके मम परमेष्टे । इष्टकाभिमानिनि वा । इष्टेस्तकन् क्षिपकादित्वादित्वाभावः । तस्यास्ते वयं हविषा । यजनमिति शेषः । विधेम करवाम ।। ३६,३७ ।।

**अश्वक्रान्ते रथक्रान्ते विष्णुक्रान्ते वसुन्धरे ।।**
**शिरसा धारयिष्यामि रक्षस्व मां पदे पदे ।।३८।।**

**धी.ती.–** ।। अथ मृत्तिकाभिमन्त्रानाह ।। **अश्वक्रान्त इति** । अश्वै राजाभिरश्वमेधार्थं विसृष्टैरश्वैः क्रान्ते आक्रान्ते । रथैः प्रियव्रतपृथ्वादिभगवदंशयुक्तमहाराजरथैः सप्तद्वीपसप्तसमुद्रकरणार्थं भूनिम्नोन्नतसमीकरणार्थे च । आक्रान्ते रथचक्रादिनाऽऽक्रान्ते । विष्णुक्रान्ते विष्णुना त्रिविक्रमरूपेण पादप्रक्षेपादिनाऽऽक्रान्ते । इदं विष्णुर्विचक्रमे त्रेधा निदधे पदमिति श्रुत्यन्तरात् । वसुन्धरे वसूनि स्वर्णादीनि धारयतीति वसुन्धरे । त्वामिति शेषः । शिरसा मूर्ध्ना धारयिष्यामि । अन्यानहं धारयामि च । तेन तव शिरसा धारणेन मां पदे पदे रक्षस्वेत्यर्थः ।।

**सा.आ.–** मृत्तिकाप्रार्थनमन्त्रमाह ।। **अश्वक्रान्ते इति** । अश्वैः क्रान्ते आक्रान्ते । रथैः क्रान्ते आक्रान्ते । विष्णुना त्रिविक्रमावतारे क्रान्ते पदैराक्रान्ते । इतरत्स्पष्टम् ।। ३८ ।।

**भूमिर्धेनुर्धरणी लोकधारिणी ।।**
**उद्धृताऽसि वराहेण कृष्णेन शतबाहुना ।। ३९ ।।**

धी.ती.– ।। भूमिप्रार्थनारूपं द्वितीयं मन्त्रमाह ।। भूमिरिति । धेनुः सकलसस्यदोग्ध्रीत्वात् । यद्वा पृथुचक्रवर्तिनो धेनुर्भूत्वा मन्वादि-तत्तद्योग्यपयोदोग्ध्रीत्वाद्धेनुः । उक्तं चैतद्भागवते चतुर्थस्कन्धेऽष्टा-दशाध्याये– वत्सं कृत्वा मनुः पापावदुहत्सकलौषधीरित्यादि । धरणी धरतीति धरणी । लोकधारिणी लोकान्धारयतीति लोकधारिणी । कृष्णेनोत्कृष्टज्ञानानन्दघनेन कृष्णवर्णेन वा शतबाहुनाऽनन्तबाहुना । शतशब्दोऽनन्तवाची । अनन्तशीर्षोऽनन्तबाहुरिति श्रुतेः । वराहेण वरान्ब्रह्मदत्तवरानवध्यत्वादीन् वरानसुरश्रेष्ठान्हिरण्याक्षादीन्वा आहन्तीति वराहस्तेन क्रोडरूपिणा जलादुद्धृताऽसि ऊर्ध्वं नीताऽसि । 'तां वराहो भूत्वाऽहरद' इति श्रुतेः ।।

सा.आ.– भूमिः भूमिरूपा सती । शतबाहुना बहुव्रीहिः । विष्णोर्मूलरूपस्य कृष्ण इति नाम । तदभिन्नेनेत्यर्थः । कृष्ण-वर्णेनेत्यर्थः इति तु न युक्तम् । पुराणेषु तस्य श्वेतवर्णत्वप्रसिद्धेः । वराहेण तन्नाम्ना विष्णववतारेण उद्धृताऽसि । धेनुरूपा । शास्त्रेषु तथा प्रसिद्धेः । यतो लोकधारिणी अतो धरणीति लोके प्रसिद्धाऽसीत्यर्थः ।। ३९ ।।

**मृत्तिके हन मे पापं यन्मया दुष्कृतं कृतम् ।**
**मृत्तिके ब्रह्मदत्ताऽसि काश्यपेनाभिमन्त्रिता ।।**
**मृत्तिके देहि मे पुष्टिं त्वयि सर्वं प्रतिष्ठितम् ।।४०।।**
**मृत्तिके प्रतिष्ठिते सर्वं तन्मे निर्णुद मृत्तिके ।।**
**त्वया हतेन पापेन गच्छामि परमां गतिम् ।।४१।।**

धी.ती.– ।। मृत्तिकाप्रार्थनारूपमन्त्रान्तराण्याह ।। मृत्तिके

इत्यादिना । हे मृत्तिके! यन्मया दुष्कृतं पापं यत्कृतं तत्तु हन परिहर । हे मृत्तिके! ब्रह्मणा वराहरूपिणा चतुर्मुखेन वा दत्ताऽसि । काश्यपेन ऋषिणा स्थैर्याय मन्त्रोच्चारणपूर्वकमभिमन्त्रिता स्पृष्टाऽसि । हे मृत्तिके! मे पुष्टिं वृद्धिं देहि । यतस्त्वयि पुष्टिसाधनीभूत-व्रीहियवादिद्रव्यं प्रतिष्ठितम् । अतो मे पुष्टिं देहि । हे मृत्तिके! सर्वं प्रतिष्ठिते सर्वाभिमुख्येन स्थिते त्वयि च सर्वं जगत्प्रतिष्ठितम् । पापहरणोपायादिकं च त्वयि प्रतिष्ठितम् । तस्मान्मे पापं निर्णुद परिहरेत्यर्थः । हे मृत्तिके! त्वया नाशितेन पापेन परमामुत्तमां गतिं स्वर्गादिलक्षणां गच्छामि यास्यामीति ॥

सा.आ.– ॥ हे मृत्तिके! मम पापं हन जहि । यन्मया दुष्कृतं कृतं तज्जन्यमित्यर्थः । हे मृत्तिके! ब्रह्मणा सर्वेभ्यो जीवनार्थं दत्ताऽसि । काश्यपेनाभिमन्त्रिताऽसि च । अतो वीर्यवत्तरा त्वमिति भावः । हे मृत्तिके! मे पुष्टिं देहि । यतस्त्वयि सर्वं पुष्टिसाधन-मोषध्यादिकं प्रतिष्ठितमित्यन्वयः । प्रतिष्ठिते । वराहेणेति शेषः । हे मृत्तिके । मे यत्पुष्टिप्रतिबन्धकं रोगादि उत्तमगतिप्रतिबन्धकं पापादि च तत्सर्वं निर्णुद नाशय । द्वितीयस्य मृत्तिके इत्यस्योत्तरेणान्वयः । त्वयेति शाखान्तरीयपाठः । तयेति पाठेऽपि त्वयेत्यर्थः । हतेन पापेन परमां गतिं गन्तव्यं लोकम् । कर्मणि क्तिन् क्तिज्वा । गच्छामि । विशेष्ये पापे बाधाद्विशेषणे हनने गतिहेतुत्वं पर्यवस्यति ॥ ४०,४१ ॥

**यत इन्द्र भयामहे ततो नो अभयं कृधि ॥**
**मघवञ्छग्धि तव तन्न ऊतये**
**विद्विषो विमृधो जहि ॥ ४२ ॥**

स्वस्तिदा विशस्पतिर्वृत्रहा विमृधो वशी ।।
वृषेन्द्रः पुर एतु नः स्वस्तिदा अभयङ्करः ।।४३।।
स्वस्ति न इन्द्रो वृद्धश्रवाः
स्वस्ति नः पूषा विश्ववेदाः ।।
स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिः
स्वस्ति नो बृहस्पतिर्दधातु ।। ४४ ।।

धी.ती.– ।। स्नानाय तीर्थयात्रासमये सम्भावितभयपरिहारार्थं पापशत्रुनिबर्हणार्थं चेन्द्रान्तर्गतं हरिमर्थयते ।। यत इन्द्र इति । हे इन्द्र परमैश्वर्यशालिन् भगवन् । इदि परमैश्वर्य इति धातोरौणादिको रन्प्रत्ययः । इदं विषयजातमुद्दिश्य द्रुतेर्द्रवणाद्वा सर्वविषयभोगाच्चेन्द्र इति ऋग्भाष्यटीकोक्तेः । मघवन्यज्ञशालिन् । यतः पापाच्छत्रोर्वा भयामहे भीता वर्तामहे । ततो नोऽभयं कृधि कुरु । तद्भयादिकं न ऊतये त्राणाय न भवति तच्छग्धि आच्छादय । विद्विषः शत्रून्विमृधो विशेषितपापांश्च कामक्रोधाद्यान्तरशत्रूंश्च जहि नाशय । नः स्वस्तिदा स्वस्तिदः । सुपां सुलुगिति पूर्वसवर्णदीर्घः । स्वस्ति क्षेमपुण्यादाविति कोशात् । विशस्पतिः विशां प्रजानां वैश्यानां वा पतिः । विट्शब्दस्यासुडागमश्छान्दसः । वृत्रहा तमोपहर्ता । वृत्रं तम इति ऋग्भाष्यात् । अज्ञाननाशक इति यावत् । विमृधो विपापान्वशी वशीकरणशीलः । वृषा सर्वाभीष्टसेचकः । वृष सेचन इति धातोः । एतादृश इन्द्रान्तर्गतः परमात्मा स्वस्तिदा क्षेमदः । अभयङ्करोऽभीत-कारी सन् । नः पुरः पुरोभागे एतु गच्छतु । गत्वा च वृद्धश्रवा वृद्धमभिवृद्धं श्रवो यशः श्रोत्रं वा यस्य स तथोक्तः । तथाविधो भगवान् नः स्वस्ति दधातु विदधातु । करोत्विति यावत् । विश्वं

वेत्तीति विश्ववेदाः । विश्वमिति द्वितीयान्तोपपदाद्विदेः कर्तरि असुन्प्रत्ययः । सर्वज्ञ इति यावत् । पूषा पूर्णः । तत्तु पूर्णत्वतः पूषेति ईशावास्यभाष्यवचनात् पूषन्शब्दवाच्यः । तदन्तर्गतो हरिर्नः । स्वस्ति दधातु । अरिष्टनेमिः अरिष्टं शुभाशुभं नियमयतीत्यरिष्टनेमिः। अरिष्टस्य पापस्य नेमिः परिहारकः सहस्राधारस्थानीय इति वा । तार्क्ष्यो गरुडस्तदन्तर्गतो भगवांश्च स्वस्ति दधातु । बृहस्पतिः बृहतां ब्रह्मादीनां पतिः स्वामी देवगुर्वन्तर्गतो वा हरिः स्वामी नः स्वस्ति दधातु ॥

**सा.आ.**– इन्द्रादीन्प्रत्यभयादि प्रार्थयते ॥ **यत इति** । हे इन्द्र । यतः पदार्थाद्भयामहे बिभेमहि ततो नोऽस्माकमभयं कृधि कुरु । हे मघवन् । तव त्वम् । प्रथमार्थे षष्ठी । शग्धि शक्नोषि । अभयदाने शत्रुहनने चेति शेषः । तत्तस्मात् नोऽस्माकमूतये रक्षणाय विमृधो हिंसकान् विद्विषो द्वेषिणं जहीत्यन्वयः । तव यस्माच्छक्तिरस्ति तत्तस्मादिति वाऽर्थः । इतरत्पूर्ववत् । स्वस्ति ददातीति स्वस्तिदाः । विशस्पतिः प्रजानां पतिः । वृत्रहा वृत्रासुरहन्ता । विमृधः शत्रुहिंसकः । इगुपधज्ञेति कः । वशी स्वतन्त्रो, वृषा अभीष्टसेचकः। इन्द्रो नोऽस्माकं पुर एतु । पुनः स्वस्तिदा इत्युक्तिः स्वस्त्यंशे उत्कटेच्छाज्ञापनाय । अभयङ्कर इतीन्द्रस्य विशेषणम् । इन्द्रो नः स्वस्ति दधात्वित्यन्वयः । एवमग्रे । तद्विशेषणं वृद्धश्रवा इति । अभिवृद्धकीर्तिरित्यर्थः । विश्वं वेत्तीति विश्ववेदाः । वेत्तेरौणादिकोऽसुन् । तार्क्ष्यो गरुडोऽरिष्टनेमिःकल्याणपक्षः ॥ ४२-४४ ॥

**आपान्तमन्युस्तृपलप्रभर्माधुनिः**

**शिमीवाञ्छरुसा ऋजीषी ॥**

**सोमो विश्वान्यतमा वनानि नार्वागिन्द्रं**
**प्रतिमानानि देभुः ।। ४५ ।।**

**धी.ती.–** ।। इतः परं सोमलताभिमानिनि चन्द्रे भगवन्तं चार्थयते ।। **आपान्तमन्युरित्यादिना** । आपान्तमन्युः रसागमनपर्यन्तं दृढ इत्यर्थः । अपामन्तो नाशः । आ आपामन्त आपान्तो मन्युः शास्त्यं यस्य सः । यद्वा अपान्तमन्युः आपो व्याप्तः । आप्लृ व्याप्ताविति धातोः । निष्ठार्थे औणादिकोऽत्प्रत्ययः । आपो मन्युः क्रतुर्येन स तथोक्तः । सर्वक्रतुसमाप्तिनिदानकर इति यावत् । मन्युर्दैन्ये क्रतौ क्रुधीति कोशात् । त्रिफलप्रकर्मेति पाठे ऐहिकस्वर्ग-मोक्षलक्षणफलत्रयपूरक इत्यर्थः । तृफलप्रभर्मा फलत्रयादिरसपरिपूर्ति-जनकः । धुनिः देवप्रीतिजनकः । धुनि प्रीणन इति धातोः । कर्तरि औणादिको डप्रत्ययः । शिमीवान् स्निग्धरसवान् । शरूमान् सोमयागचर्वादिसहितो द्रववान्वा । ऋजीषी नीरसद्रवः । ऋजीष्याख्यकलशवान् । तृतीयसवनमृजीषमभिषण्वन्तीति श्रुतेः । प्रातःसवनमाध्यन्दिसवनयोः सोमरसहोमस्तृतीयसवने तु ऋजीषोपरि दधि प्रक्षिप्याभिषवं कृत्वा तेन रसेन होम इति याज्ञिकसम्प्रदायः । एतादृशः सोमः सोमराजा सोमलताभिमानी चन्द्रो वा । तदन्त-र्गतोत्कृष्टमासहितत्वेन सोमशब्दवाच्यो भगवांश्च । विश्वा विश्वानि । इन्द्रप्रतिमानानि ऐन्द्रसदृशानि वनानि । अतसा सन्ततप्रसरणेन । अर्वाक् अधस्तात् । भूलोके देभुः विनामयदित्यर्थः । दभ दर्भ गात्रविनाम इति धातोः । उत्पादितवानिति यावत् ।।

**सा.आ.–** ।। इन्द्रं स्तौति मन्त्राभ्याम् । आपान्तमन्युः आपातितमन्युः । तृपलप्रभर्मा क्षिप्रप्रहारी । धुनिः सर्वकम्पयिता ।

शिमीवान् कर्मवान् । शरूमान् आयुधवान् । ऋजीषी सोमस्य पूयमानस्यातिरिच्यते यत्तदृजीषं तदस्यास्तीति ऋजीषी । सोमलता-विशेषस्तेन तदभिमानिदेवता गृह्यते । विश्वानि सर्वाणि । अतसा अतसान्यनुपक्षीणानि वनानि । अनेनापि तदभिमानिदेवता लक्ष्यन्ते । इन्द्रमर्वागप्राप्य प्रतिमानानि न देभुः प्रतिष्ठां न प्रापुः । एनमप्राप्यैव विनश्यन्तीत्यर्थः । इन्द्रप्रशंसैषा ॥ ४५ ॥

**ब्रह्मजज्ञानं प्रथमं पुरस्ताद्विसीमतः**
**सुरुचो वेन आवः ॥**
**सुबुध्निया उपमा अस्य विष्ठाः**
**सतश्च योनिमसतश्च विवः ॥ ४६ ॥**

**धी.ती.–** ॥ ब्रह्मणा परब्रह्मणा वेदेन च प्रथममुत्पन्नं ज्ञानमेक-विधमेव । अभूदिति शेषः । पुरस्तात् स्वोत्प्रेक्षानुसारेणासुरव्यामोहनाय च विसीमतोऽनेकमर्यादारूपेण सुरुचः प्रकाशमानास्तत्तद्रुच्यनुसारेण । वेनोऽस्वामिकः । अनीश्वरवाद इति यावत् । आवः स्वीकृतवन्तः । सुबुध्निया समूलं प्राप्ता अस्य विष्ठा विष्णुनिष्ठाः । विः पक्षिपरमात्मनोरिति वैजयन्ती । विष्णुसर्वोत्तमत्वविषयं ज्ञानं सतो मोक्षादेर्योनिः कारणम् । सज्जनस्य वा कारणम् । असतश्च अस्योपमा विष्णुमार्गसदृशं ज्ञानमसतश्च योनिर्विवो नाशकम् । अतः प्रथमोत्पन्नं विष्णुसर्वोत्तमत्वज्ञानमादरणीयमिति भावः ॥

**सा.आ.–** प्रथमजं ज्ञानं प्रथममव्यक्तं ब्रह्म जनेर्लिटः कानच् । पुरस्तात् पूर्वं वेनो नामा गन्धर्वो महाज्ञानी तत्सदृशः । सुष्ठु रोचत इति सुरुच इन्द्रः । इगुपधेति कः । विसीमतः सीमानं वर्जयित्वा ।

आवः । आङ्पूर्वस्य वृणोतेर्लङि रूपम् । सम्यग्वृतवान् ज्ञातवान् । ब्रह्मणः सीमानं तु न ज्ञातवानित्यर्थः । सः सुरुचः । बुध्नियां बुद्धिमत उपमा उपमानभूतम् । अस्य ब्रह्मणः समीपे विष्ठा विशेषेण तिष्ठन् । सतो व्यक्तस्य कार्यस्य । असतोऽव्यक्तस्य कारणस्य योनिः कारणं ब्रह्म । विवो विशेषेण वृतवान् ज्ञातवान् । एवं हि छान्दोग्ये श्रूयते । इन्द्रो ब्रह्मणः समीपे स्थित्वा ततो ब्रह्मज्ञानं लेभ इति ।। ४६ ।।

**स्योना पृथिवी भवानृक्षरा निवेशनी ।।**
**यच्छा नः शर्म सप्रथाः ।। ४७ ।।**

**धी.ती.–** ।। पृथिवीस्थं पृथिवीनामकं भगवन्तं प्रार्थयते ।। **स्योनेति** । निवेशनी गृहवती प्रवेशवती वा । अनृक्षरा नॄन्पुरुषा-न्क्षरति नाशयतीति नृक्षरा । सा न भवतीत्यनृक्षरा । स्योना सुखकरी । सप्रथाः सविस्तारा पृथिवी । प्रथनात्पृथिवीशब्दवाच्या । त्वं नः शर्म यच्छ सुखं देहि । भगवद्विषये । निवेशनी श्वेतद्वीपानन्तासनवैकुण्ठादिस्थानवती । सप्रथाः सविस्तारा । पृथिव्यां पृथिवीनामकमिति भाष्यानुसारात् । अनृक्षरेत्यादि पूर्ववत् । एतादृग् भगवन्मूर्तिः । त्वं नः शर्म, यच्छ सुखकरी भव च ।।

**सा.आ.–** ।। हे पृथिवी नः स्योना सुखकारिणी भव । अनृक्षरा अकण्टका भव । निवेशनी स्थानरूपा भव । सप्रथाः प्रथनसहिता भूत्वा नः शर्म सुखं यच्छ देहि ।। ४७ ।।

**गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम् ।।**
**ईश्वरीꣳसर्वभूतानां तामिहोपह्वये श्रियम् ।।**

**श्रीर्मे भजतु । अलक्ष्मीर्मे नश्यतु ।। ४८ ।।**

धी.ती.– घ्राणग्राह्यो गुणो गन्धः । स एव द्वारं ज्ञप्तिकारणं यस्याः तां गन्धद्वारां तल्लक्षणिकामित्यर्थः । दुराधर्षां दुष्टैरसुरादिभिर्बलाद्वशीकर्तुं तिरस्कर्तुं वाऽशक्याम् । नित्यपुष्टां करीषिणीं नित्यं निरन्तरं पुष्टां स्यधनधान्यादिसमृद्धिकारिणीं तदुपलक्षितपश्वादिसङ्कुलाम् । यद्वा नित्यपुष्टां करीषिणीं स्वस्थां प्रजामिति शेषः । नित्यसमृद्धां कर्तुमिच्छन्तीम् । सर्वभूतानां समस्तप्राणिनामीश्वरीं स्वामिनीम् । एतादृशीं श्रियं तां पृथिवीं चोपव्हये समीपमाव्हयामीति । सा श्रीर्मे मम समीपं भजतु । मेऽलक्ष्मीर्दौर्भाग्यं नश्यतु ।।

सा.आ.– गन्धद्वारां गन्धो द्वारमुपलब्धिद्वारं यस्याः सा गन्धद्वारा गन्धलक्षणिकेत्यर्थः । असुरैर्दुराधर्षाम् । नित्यं व्रीह्यादीभिः पुष्टां करीषिणीं करीषेण गोमयेन युक्तां गवादिपशुयुक्तामित्यर्थः । सर्वभूतानां प्राणिनामीश्वरीं तां श्रियं भूदेवतामुपव्हये ।। ४८ ।।

**विष्णुमुखा वै देवाश्छन्दोभि-**
**रिमाँल्लोकाननपजय्यमभ्यजयन् ।।**
**महाꣳ इन्द्रो वज्रबाहुः**
**षोडशी शर्म यच्छतु ।। ४९ ।।**

धी.ती.– ।। विष्णुर्मुखं प्रधानो येषां ते विष्णुमुखा देवा ब्रह्मादयः । अनपजय्यं अन्यैर्जेतुमशक्यत्वात् । क्षय्यजय्यौ शक्यार्थ इति निपातनात् । एतादृशं दैत्यसङ्घमिमाँल्लोकांश्च । छन्दोभिर्वेदमन्त्रैः । अभ्यजयन्विजितवन्तः । तत्र महान्सर्वोत्तमो देवाधिको वा वज्रबाहुर्वज्रहस्तः षोडशग्रहणवान् नित्यषोडशवार्षिको वा । इन्द्रः प्रसिद्धो भगवांश्च शर्म सुखं यच्छतु ददातु ।।

**सा.आ.**– विष्णुमुखा विष्ण्वादयः । अतद्गुणसंविज्ञानो बहुव्रीहिः । इमाँल्लोकान् इमं भूलोकम् । अनपजय्यं असुरैर्जेतुमशक्यम् । विष्णुमुखा इति मन्त्रो दुराधर्षामित्यस्य विवरणरूपः । षोडशी षोडशकलात्मकलिङ्गदेहयुक्तोऽतिरात्रे षोडशिग्रहदेवतारूप इति वा । शिष्टं स्पष्टम् ।। ४९ ।।

**स्वस्ति नो मघवा करोतु हन्तु**
**पाप्मानं योऽस्मान्द्वेष्टि ।। ५० ।।**
**सोमान९ँ स्वरणं कृणुहि ब्रह्मणस्पते ।।**

**धी.ती.**– ।। स्वस्ति न इति । नो मघवा यज्ञशाली तत्फलभोक्ता । इन्द्रो भगवांश्च स्वस्ति । ब्रह्मणस्पते ब्रह्मणो चतुर्मुखस्य वेदस्य वा ब्राह्मणजातेर्वा पते स्वामिन् । तपो ब्रह्म ब्रह्म विप्रः प्रजापतिरिति कोशात् । ब्रह्माधिपतिर्ब्रह्मणोऽधिपतिरित्युत्तरवाक्याच्च । ब्रह्मण्यदेव इति षड्गुणनामधेय इति भागवतवचनाच्च । सोमानं उत् उत्कृष्टं मानं ज्ञानं परिमाणं वा यस्य तत् । स्वस्ति क्षेमं करोतु । नो यो द्वेष्टि अस्मद्विषयेऽनिष्टं करोति तं पाप्मानं हन्तु नाशयतु । मानं तेन सहितं सोमानमुत्कृष्टज्ञानपरिमाणपूजायुक्तमित्यर्थः । एतादृशं भगवन्तं स्वरणं सु अरणं शरणं कृणुहि कुरु ।। ५० ।।

**सा.आ.**– ब्रह्मणस्पते महागणपते । सोमानं सोतारम् । स्वरणम् । स्वरतेर्ल्युः । प्रकाशवन्तं मां कृणुहि कुरु ।। ५० ।।

**कक्षीवन्तं य औशिजं शरीरम् । यज्ञशमलं कुसीदम् ।।**
**तस्मिन्त्सीदतु योऽस्मान्द्वेष्टि ।। ५१ ।।**

**धी.ती.–** ।। **कक्षीवन्तमिति** । प्रशस्तकक्षवन्तं कक्ष्याद्यवयवोपेतं शरीरं सोमानमित्यत्रापि सम्बध्यते । उत्कृष्टमानौ ज्ञानौ प्राणावुपमानौ ताभ्यां सहितं सोमानम् । जीवशरीरमिति यावत् । यज्ञशमलं यज्ञेन ज्योतिष्टोमादिना भगवत्पूजादिना वाऽपहतं शमलं पापं यस्य तथोक्तम् । एतादृशं शरीरं स्वरणं स्वाश्रयं कृणुहीति पूर्वेणान्वयः ।। **य औशिज-मिति** । सहजमित्यर्थः । कुसीदमृणम् । कुसीदं वृद्धि-जीवनमिति कोशात् । योऽस्मान्द्वेष्टि तत्तस्मिन्सीदतु गच्छतु । षद्लृ विशरणगत्योरिति धातोः ऋणमस्माकं मा भूत् शूत्रून्प्रति गच्छत्विति भावः ।।

**सा.आ.–** उशिजोऽपत्यमौशिजस्तम् । कक्षीवन्तं तन्नामानं राजानमृषिं वा । स्वरणं यः कृतवांस्तादृशः । इदं ब्रह्मणस्पत इत्यस्य विशेषणम् । योऽस्मान्द्वेष्टि स शरीरं यज्ञशमलं यज्ञप्रतिबन्धकं कुसीदं कुत्सितं नास्तिकं वा यत्तस्मिन्त्सीदतु ।। ५१ ।।

**चरणं पवित्रं विततं पुराणं**
**येन पूतस्तरति दुष्कृतानि ।।**
**तेन पवित्रेण शुद्धेन पूता**
**अति पाप्मानमरातिं तरेम ।। ५२ ।।**

**धी.ती.–** ।। स्नानानन्तरं मुद्राधारणमन्त्रानाह ।। **चरणमिति** । यत्पवित्रं पावित्र्यकारि । विततं भक्तेषु धारणादिना व्याप्तं पुराणं पुरातनं यच्चरणं चक्रं पवित्रम् । चरणं चक्रं रथनेमिः सुदर्शनं चेति पर्यायवाचका ह्येते चक्रस्य परमात्मन इति वेदनिघण्टौ । येन परमात्मचक्रेण पूता अरातिं पाप्मानमतितरेमेति सम्बन्धः ।

व्यवहिताश्छन्दसीति शास्त्रात् । माध्यन्दिनशाखायां च गोपी-चन्दनादिना चक्रादिधारणस्य विहितत्वात् ।

'धृतोर्ध्वपुण्ड्रतिलकः समदुःखसुखः क्षमी ।
सदा परमया भक्त्या स्मरन्पुरुषविग्रहम् ।
दिव्यैस्तु पञ्चभिः खड्गचक्रशाङ्र्गगदाम्बुजैः ।
मुद्रैः कृत्वाऽखिलाङ्गोऽसौ सूरिरित्युच्यते बुधैः' इति ।

एवमन्यान्यपि श्रुतिस्मृतीतिहासपुराणवचनानि सन्ति ।।

सा.आ.– चरणं पापभक्षकं पापनाशकं पवित्रं चक्रम् । पद्मोत्तरखण्डे तथोक्तेः । विततं रश्मिभिर्विस्तृतम् । येन धृतेन पूतः प्राणी दुष्कृतानि तरति । उत्तरार्धं स्पष्टम् ।। ५२ ।।

**सजोषा इन्द्र सगणो मरुद्भिः**
**सोमं पिब वृत्रहञ्छूर विद्वान् ।।**
**जहि शत्रूꣳ रपमृधो नुदस्वाथा**
**भयं कुणुहि विश्वतो नः ।। ५३ ।।**

धी.ती.– ।। सजोषा देवैः सह । इन्द्र, शूर शौर्यादिगुणोपेत, विद्वान् विद्वन् । हे वृत्रहन् वृत्रघ्नो दुरितघ्नो वा । मरुद्भिः एकोनपञ्चाशन्मरुद्भिस्तदुपलक्षितदेवैर्वा । सगणः सपरिवारः । सोमं सोमरसममृतं वा पीत्वा च त्वं शत्रून् जहि संहर । मृधः पापानि अपनुदस्व परिहर । अथ पापपरिहारानन्तरं विश्वतः सर्वस्मात् नोऽस्माकमभयं कृणुहि कुरुष्व । शत्रून्संहृत्यास्माकं पापपरिहारा-नन्तरमभयं देहीत्यर्थः ।।

सा.आ.– सजोषा देवैः सह हविर्जुषत इति तथा । विद्वान् विद्वन् । मृधो हिंसकान्व्याघ्रादीनपनुदस्व नाशय । शिष्टं स्पष्टम् ।। ५३ ।।

सुमित्रा न आप ओषधयः सन्तु दुर्मित्रास्तस्मै
भूयासुर्योऽस्मान्द्वेष्टि यं च वयं द्विष्मः ।। ५४ ।।

धी.ती.– ।। इतः परमर्धेन मन्त्रेणाबोषधादीनां प्रार्थना ।। सुमित्रा इति । न आप ओषधयश्च तदभिमानिनो देवताः सुमित्राः सुप्रियाः सन्तु । योऽस्मान् द्वेष्टि यं च वयं द्विष्मस्तेषां सर्वेषां दुर्मित्रा अप्रियकारिणो भूयासुः भवन्तु ।।

आपो हि ष्ठा मयोभुवस्ता न ऊर्जे दधातन ।
महेरणाय चक्षसे । यो वः शिवतमोरस-
स्तस्य भाजयतेह नः । उशतीरिव मातरः ।
तस्मा अरं गमाम वो यस्य क्षयाय जिन्वथ ।
आपो जनयथा च नः ।। ५५ ।।

धी.ती.– ।। 'तर्जनीमध्यमाभ्यां च तृचेनाब्देवतेन वै । वैश्वदेवः स्मृतो मन्त्रो ह्यापो हि ष्ठेति वै तृच' इति स्मृत्युक्तमार्जनमन्त्र-माह ।। आप इति । या आपो जलतदभिमानिन्यो देवताः । 'आपिबत्यखिलान्भोगान् आपिबत्यखिलं हरिः' इति । 'एकशब्दै-र्द्विशब्दैश्च बहुशब्दैश्च केशवः । एक एवोच्यते वेदैः' इति । 'स्त्रीपुंशब्देन वाच्योऽसौ' इत्यादेश्च आप इति बहुवचनान्तस्त्रीलिङ्ग-शब्दवाच्या भगवन्मूर्तयश्च । मयोभुवः सुखाश्रयास्थः । हि प्रसिद्धाः । ता आपो न ऊर्जे अन्नाय । ऊर्जारूपश्रैष्ठ्याय वा । ऊर्जा अन्नमिति श्रुतेः । महेरणाय महस्योत्सवस्य मोक्षख्यस्य ईरणाय

प्रेरणाय प्रापणाय । मह उद्धव उत्सव इति कोशात् । चक्षसे व्यक्तापरोक्षज्ञानाय च । दधातन अभवन्किलेत्यर्थः । हे आपः । वो भवतीनामतिशयेन शिवः शिवतमो रसो मधुररसस्तत्रस्थः श्रेष्ठः परमात्मा च । रसंह्येवायं लब्ध्वाऽऽनन्दी भवतीति ब्रह्मवल्युक्तेः । रसोऽहमप्सु कौन्तेयेति विभूत्यध्यायोक्तेः । यस्य रसस्य भगवद्विषयकापरोक्षस्य । ज्ञानज्ञानिनोरभेदात् । भाजयत नोऽपरोक्ष-ज्ञानिनः कुरुत । कथमिव । उशतीः पुत्रवत्सला मातरः प्रसूता गाव इव तथा नो रसापरोक्षादिभागिनः कुरुतेत्यर्थः । तस्य संसारलब्धस्य सञ्चितपापस्य वा क्षयाय परिहाराय । हे आपः । यूयं वो रसं भगवद्विषयकापरोक्षज्ञानम् । नो जिन्वथ अस्माकमुत्पादयथ । तेन भगवत्प्रसादद्वारा मोक्षं जनयथ च । तस्मै संसारबन्धादिनाशाय वो भगवन्मूर्तिः अरं क्षिप्रं गमाम अपरोक्षीकुर्मः । लघु क्षिप्रमरं द्रुतमिति कोशात् । एभिर्मन्त्रैः पादादिशिरःपर्यन्तं मार्जनं कुर्यात् ।।

**सा.आ.**– ।। हे आपः । यूयं मयोभुवः (सुखभुवः) स्थ । ता यूयं नोऽस्मान् । ऊर्जे बलायान्नाय वा दधातन धत्त । तप्तनप्तेति तनप् । किञ्च महे महते रणाय युद्धाय चक्षसे ज्ञानाय च । नो दधातनेत्यन्वयः । यद्वा महे महते रणाय रमणीयाय चक्षसे दर्शनीयाय । अन्वयः पूर्वत्र । वो युष्माकं यः शिवतमः कल्याण-तमो रसो मधुररसस्तस्य नो भाजयत तद्भागिनोऽस्माकं कुरुत । उशतीः उशत्यः पुत्रकल्याणेच्छवो मातर इव स्तनरसभागिनं पुत्रम् । हे आपः । यस्य पुरुषस्य क्षयाय जिन्वथ इच्छथ । तस्मै अरं दोषं गमाम गमयाम । दोषेण स नश्यतीत्यर्थः । यद्वा यस्य क्षयाय निवासाय निवासं गन्तुं जिन्वथ प्रीता भवत । तस्मै तद्गृहं वयमरं

शीघ्रं गमाम गच्छाम । गत्यर्थेति कर्मणि चतुर्थी । अस्मान् यूयं जनयथा जनयथ च । अबादिभूतैः शरीरोत्पत्तेः ।। ५५ ।।

हिरण्यशृङ्गं वरुणं प्रपद्ये तीर्थं मे देहि याचितः ।।
यन्मया भुक्तमसाधूनां पापेभ्यश्च प्रतिग्रहः ।। ५६ ।।

यन्मे मनसा वाचा कर्मणा वा दुष्कृतं कृतम् ।।
तन्न इन्द्रो वरुणो बृहस्पतिः
सविता च पुनन्तु पुनः पुनः ।। ५७ ।।

धी.ती.– ।। जलाधिपतिं वरुणं वरोन्नयनाद्वरुणशब्दवाच्यं तत्स्थं भगवन्तं चासाधूनामन्नभोजनादिकृतपापपरिहाराय तीर्थदानायार्थयते । हिरण्येति । हिरण्यशृङ्गं स्वर्णमुकुटं तत्प्रधानं वा । शृङ्गं प्राधान्य-सान्वोश्चेति कोशात् । स्वर्णमयशृङ्गवदुपर्यास्थितं मुकुटं यस्यासौ हिरण्यशृङ्गः। तादृशं वरुणं जलाधिपतिं भगवन्तं च प्रपद्ये शरणमेमि । हे वरुण । याचितः प्रार्थितो मे तीर्थं गङ्गादिजलं देहि । तं त्वा च । असाधूनां पापिनां गृहे मया भुक्तं पापेभ्यः महापातकेभ्यो यः प्रतिग्रहः । कृत इति शेषः । मे मया मनसा वाचा कर्मणा वाऽन्यदपि दुष्कृतं कृतं तदिन्द्रो वरुणो बृहस्पतिश्च सविता च पुनन्तु शोधयन्तु । पुनः पुनः शोधयन्तु । मनसा करणं नाम पापकरणसङ्कल्पः । वाचा करणमेवं पापं करिष्य इत्युच्चारणम् । क्रियया तु पापाचरणमेव । अनेन वरुणाद्या देवतास्तदन्तर्यामी हरिश्च प्रार्थनीयाः ।।

धी.ती.– ।। हिरण्यशृङ्गं हिरण्मयशृङ्गयुक्तं शृङ्गाकारमुकुटयुक्तं वा । असाधूनाम् । अन्नमिति शेषः । प्रतिग्रहः । कृत इति शेषः ।

मे मया कर्मणा कर्मेन्द्रियेण । नस्तत्सर्वं बृहस्पतिर्देवगुरुर्वायुर्वा । एतमु एव बृहस्पतिं मन्यन्त इति छान्दोग्यात् । वरुणस्य तीर्थमुख्य-देवतात्वेऽपीन्द्रा-दीनामपि तीर्थदेवतात्वमेतच्छास्त्रात् ॥ ५६,५७ ॥

**नमोऽग्नयेऽप्सुमते नम इन्द्राय नमो वरुणाय**
**नमो वारुण्यै नमोऽद्भ्यः ॥ ५८ ॥**

**यदापं क्रूरं यदमेध्यं यदशान्तं तदपगच्छतात् ॥ ५९ ॥**

**धी.ती.–** ॥ जलावस्थितदेवतानां नमस्कारमन्त्रानाह ॥ **नम** इति । अप्सुमत्त्वगुणकाय अग्नये वडवानलाय । तस्यैवाप्सु विद्यमान-त्वात् । इन्द्राय नमः । वरुणाय नमः । वारुण्यै शेषपत्न्यै वरुणान्यै नमः । नमोऽद्भ्योऽबभिमानिदेवताभ्यो नमः । यदपां क्रूरं अपां सम्बन्धिक्रूररूपमावर्तादि यच्चामेध्यमपवित्रं निष्ठीवनादि दुष्टं यदशान्तम-सुखकरं वातश्लेष्मादिजनकं तत्सर्वमपगच्छतात् अस्मिन्निमज्जनदेवता-वशादपयातात् ॥ ५८,५९ ॥

**सा.आ.–** ॥ अप्सुमते अप्सुमदाज्यभागमन्त्रप्रतिपाद्याय । अग्नय इत्यस्य विशेषणम् । वरुणस्येयं स्त्री वारुणी । तस्येदमित्यण् । यदपां क्रूरं रूपमावर्तादि विषादि घोरशब्दादि वा । अमेध्यमशुद्धं फेनादि । अशान्तं वातश्लेष्मादिजनकम् ॥ ५८,५९ ॥

**अत्याशनादतीपानाद्यच्च उग्रात्प्रतिग्रहात् ॥**
**तन्नो वरुणो राजा पाणिना ह्यवमर्शतु ॥ ६० ॥**

**सोऽहमपापो विरजो निर्मुक्तो मुक्तकिल्बिषः ॥**
**नाकस्य पृष्ठमारुह्य गच्छेद्ब्रह्मसलोकताम् ॥ ६१ ॥**

**यश्चाप्सु वरुणः स पुनात्वघमर्षणः ॥ ६२ ॥**

**धी.ती.–** ॥ इतः परं निमज्जनमन्त्रानाह ॥ **अत्याशनादिति** ॥ अत्याशनात् भगवन्निवेदनमतिक्रम्याशनात् देवर्षिपित्रादियज्ञमतीत्य भुक्ताद्वा । बहुभोजनाच्चास्वर्ग्यमेति भोजनमिति श्रुत्या नृषु दोषत्वोक्तेः । अतीपानात् अत्यम्बुपानात् भगवत्तीर्थमतिक्रम्य पानाच्च वा । यच्च । उग्रात् प्रतिग्रहात् उच्छास्त्रवर्तिनस्तस्मात्परिग्रहः । यद्वा कलिपुरुषादिदानप्रतिग्रहः । प्रतिग्रहात् यच्च पापं तज्जनितं यत्पापम् । मे मदीयम् । वरुणो राजा पाणिना हस्तेन स्वकीयेनावमर्शतु अपनयतु । ततोऽपापः पापरहितः सोऽहं विरजो रजोगुणोपलक्षितप्रकृतिबन्धरहितः । निर्मुक्तः संसारकारणरागद्वेषादिनिर्मुक्तः । अत एव मुक्तकिल्बिषः सञ्चितागामिपापविधुरो नाकस्य पृष्टं ततोऽप्युच्चमहरादिलोकमारुह्य ब्रह्मसलोकतां चतुर्मुखस्य सलोकतां परब्रह्मसमानलोकतां सालोक्यमुक्तिं च गच्छेत् गच्छेयम् । पुरुषव्यत्ययश्छान्दसः । यश्चाप्सु उदके वरुणश्चरणीयो हरिः स प्रसिद्धोऽघमर्षणः पापमर्षणः पुनातु ॥ ६०-६२ ॥

**सा.आ.–** ॥ अत्याशनात् विष्णुनिवेदनं वैश्वदेवं प्राणाहुतिं चातिक्रम्य कृतादशनात् । विष्णुनिवेदनपूर्वोत्तरापोशनं चातिक्रम्य कृतं पानमतीपानम् । अशास्त्रवर्तिपुरुषाच्छूद्रादेश्च प्रतिग्रह उग्रः प्रतिग्रहस्तज्जनितं यत्पापं तत् । पाणिना स्वकीयपाणिना । राजा जलस्वामी वरुणोऽवमर्शतु अपनयतु । विरजः पापकारणरजोगुणरहितः । निर्मुक्तः रागद्वेषादेः । निर्मुक्त इत्यस्य विवरणं मुक्तकिल्बिष इति । किल्बिषं रागद्वेषादिमलं कायमलं वाऽतो न पुनरुक्तिः । गच्छेत् गच्छेयम् । ब्रह्मसलोकतां ब्रह्मणा हिरण्यगर्भेण

सलोकताम् । वरुणस्य मुख्यजलदेवतात्वात्पुनस्तं प्रार्थयते । यश्चेति ॥ ६०-६२ ॥

**इमं मे गङ्गे यमुने सरस्वति**
**शुतुद्रि स्तोमꣳ सचता परुष्णिया ॥**
**असिक्निया मरुद्वृधे वितस्तयाऽऽ-**
**र्जीकीये शृणुह्या सुषोमया ॥ ६३ ॥**

**धी.ती.–** ॥ तीर्थभूतानां गङ्गादिनदीनां जलदेवतानामावाहन-मन्त्रानाह ॥ **इमं म इति** । गङ्गे भागीरथि यमुने सूर्यतनये सरस्वति च । प्रसिद्धा । शुतुद्रीति नदीविशेषस्य संज्ञा । सचता परुष्णिया असिक्निया वितस्तया आर्जीकीये सुनद्या सुषोमया । एताभिर्नदीभिः सहिता मदीयमिमं स्तोमं स्तोत्रं शृणुहि शृणु । श्रुत्वा तत आसचता आगत्य जलद्वारेण मयि समवेता भव । गङ्गायमुनासरस्वत्यः प्रसिद्धाः । कावेरी कवेरकन्या । कावेरी सह्ययोनिमरुद्वृधेति कोशात् ॥ ६३ ॥

**सा.आ.–** ॥ हे गङ्गे यमुने सरस्वति शुतुद्रि मरुद्वृधे आर्जीकीये । एतानि नदीवाचकानां सम्बोधनानि । परुष्णिया असिक्निया वितस्तया सुषोमयेति पदचतुष्टयं तृतीयान्तं नदीवाचकम् । सहयोगे तृतीया । गङ्गे इत्यादीनां विशेषणम् । मे मदीयमिमं स्तोमं स्तोत्रं शृणुहि । श्रुत्वा आसचत मत्समवेता भवत । आसेचयत वा ॥ ६३ ॥

**ऋतं च सत्यं चाभीद्धात्तपसोऽध्यजायत ॥**
**ततो रात्रिरजायत ततः समुद्रो अर्णवः ॥ ६४ ॥**

समुद्रादर्णवादधि संवत्सरो अजायत ॥
अहोरात्राणि विदधद्विश्वस्य मिषतो वशी ॥ ६५ ॥

सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत् ॥
दिवं च पृथिवीं चान्तरिक्षमथो सुवः ॥ ६६ ॥

धी.ती.– ॥ जलनिमग्नस्य प्राणायामार्थमघमर्षणसूक्तमाह ॥ ऋतं चेति । ऋतं यथार्थविज्ञानम् । सत्यं यथार्थभाषणम् । चशब्दात् स्वीयं धर्मजातं समुच्चीयते । तत्सर्वम् अभीद्धात् अभितः प्रकाशमानात् । परमात्मनस्तपसोऽधि स्रष्टव्यपर्यालोचनालक्षणात् तपस ऊर्ध्वम् । स तपस्तप्त्वा इदं सर्वमसृजदिति श्रुतेः । यस्य ज्ञानमयं तप इति श्रुत्यन्तराच्च । अजायत ऋतसत्यादिकमुत्पन्नम् । ततः तत्परमेश्वरात् रात्रिरुत्पन्ना । ततः तस्मात् परमेश्वरात् । समुद्रिक्तः समुद्रोऽर्णवोऽब्धिरवान्तरभेदयुक्तः समुद्र उत्पन्नः । अधि संवत्सरोपलक्षितकृत्स्नकालः संवत्सरशब्दितचतुर्मुखश्च । अजायत उत्पन्नः । सोत्मनो मनसाऽस्राक्षीदप एव जनार्दनः । शयानस्तासु भगवान्निर्ममेऽण्डं महत्तरम् । तत्र संवत्सरं नाम ब्रह्माणमसृजत्प्रभुरिति भाष्योदाहृतमहाकौर्म्यवचनात् । तत्राहोरात्राणि प्राणरयिरूपाणि । अहरेव प्राणो रात्रिरेव रयिरिति श्रुतेः । प्राणोऽहनि वाङ्निशीति षट्प्रश्नभाष्यात् । विदधत् । मिषतः पश्यतो विश्वस्य वशी समस्तप्रपञ्चवशीकरणशीलो भूत्वा वर्तते । स तादृशो धाता परमेश्वरः । डुधाञ्धारणपोषणयोरिति धातोः कर्तरि तृच् । धारणपोषणादिकर्ता हरिः । यथापूर्वं सूर्याचन्द्रमसौ देवते । देवताद्वन्द्वे चेति पूर्वपदान्तस्यानङादेशः । सूर्यादिदेवान्पृथिव्यादिलोकांश्च यथापूर्वं अतीतसृष्टौ यस्य यादृशं रूपं तादृशमनतिक्रम्य । अकल्पयत्

सङ्कल्पमात्रेण सम्पादितवानित्यर्थः । दिवं चेत्युक्त्वा सुव इति भागविशेषस्य तदुपरितनलोकानां वा ग्रहणम् ।। ६४-६६ ।।

**सा.आ.–** ऋतं चेत्याद्यघमर्षणसूक्तं भाववृत्तनामकहरिदेवताकम् । भाववृत्तो हरिः स्मृत इत्यग्निपुराणात् । भाववृत्तं ब्रह्मदेवतेत्यपि केचित् । ऋतं यज्ञादिकर्मफलसहितम् । सत्यं वेदः । ऋतं मानसं सत्यं वाचिकमित्यन्ये । अभीद्धात् अभितो दीप्तिमतः परमेश्वरात् । तपसोऽधि स्रष्टव्यपर्यालोचनादनन्तरमजायत । ततः परमेश्वरात् । अर्णवो बहूदकः । मिषतश्चेष्टतो विश्वस्य वशी नियमिता । अहोरात्राणि विदधत् । अतो धाता तन्नामेश्वरः । तद्विभागसिध्यर्थं सूर्याचन्द्रमसौ । यथापूर्वं पूर्वकल्पे यन्नामरूपोपेतं तथा । अकल्पयत् असृजत् । दिवं महराद्युपरितनलोकं, सुवः स्वर्गलोकम् ।।६४-६६।।

**यत्पृथिव्याꣳ रजः स्वमान्तरिक्षे विरोदसी ।।**
**इमास्तदापो वरुणः पुनात्वघमर्षणः ।। ६७ ।।**

**पुनन्तु वसवः पुनातु वरुणः पुनात्वघमर्षणः ।।**
**एष भूतस्य मध्ये भुवनस्य गोप्ता ।। ६८ ।।**

**एष पुण्यकृताँल्लोकानेष मृत्योर्हिरण्मयम् ।।**
**द्यावापृथिव्योर्हिरण्मयम् ।**
**द्यावापृथिव्योर्हिरण्मयꣳ स श्रितꣳ सुवः ।।**
**स नः सुवः सꣳ शिशाधि ।। ६९ ।।**

**धी.ती.–** ।। अथाघमर्षणस्नानं कृत्वा तत ऊर्ध्वमवगाहनार्थं तिस्र ऋचो दर्शयति ।। यदिति । पृथिव्यां वर्तमानानामस्माकं यत्स्वकीयं

रजः पापमस्ति । आन्तरिक्षे अन्तरिक्षलोके वर्तमानतादशायां विरोदसी विशेषाकारेण रोदस्योर्द्यावापृथिव्योर्वर्तमानतादशायां यत्पापमस्ति । अत्र रोदस्योः पृथग्ग्रहणात्पृथिव्यामिति पदेन भूमेरधस्ताद्विद्यमानः पाताललोको विवक्षितः । सर्वेष्वपि च लोकेषु तत्तच्छरीराण्यनुभवतामस्माकं तत्तच्छरीरेऽनुष्ठितं यत्पापमस्ति तत्सर्वं वरुणः पुनातु शोधयतु । शुद्धानस्मान्करोत्विति यावत् । कीदृशो वरुणः । पापविनाशको हरिः पुनातु । वसवोऽष्टवसवः पुनन्तु । वरुणोऽघमर्षणो हरिश्च पुनातु । कथंभूतो हरिरित्यत आह ॥ **भूतस्येति** । भूतस्य अतीतस्य पञ्चमहाभूतस्य वा मध्ये अन्तःप्रविष्टस्ततो गोप्ता रक्षकः । तत्सृष्ट्वा तदेवानुप्राविशदिति श्रुतेः । एष परमात्मा पुण्यकृताँल्लोकान्दत्वा गोप्ता रक्षकः । एष अघमर्षणो हरिर्मृत्योः सर्वप्राणिमारकस्य यमस्य सम्बन्धिनं हिरण्मयं लोकविशेषं द्यावापृथिव्योः संश्रितं सुवः स्वर्गलोकं दत्वा गोप्ता रक्षकः ॥ स त्वं पूर्वोक्तो भगवान्नोऽस्माकं सुवः संशिशाधि सम्यगनुगृहाण ॥६७-६९॥

**सा.आ.–** अघमर्षणोत्तरमवगाहनार्था इमास्तिस्र ऋचः । यत्पृथिव्यामित्यादि । यत्पृथिव्यां रजो मलं स्वं स्वकीयम् । आसमन्तादन्तरिक्षे विरोदसी रोदस्योर्मध्ये । इदमन्तरिक्षे इत्यस्य विशेषणम् । अपामयं स्वामी आपः । तस्येदमित्यण् । अघानि मर्षयतीत्यघमर्षणः । तत् रजोमलम् । इमान् अवगाहमानान्प्राणिन उद्दिश्य पुनातु शोधयतु ॥ स्वर्गान्तरिक्षादिभवं पापं शोधयत्वित्यर्थस्तु न युक्तः । स्वर्गान्तरिक्षयोः पापानुत्पत्तेः । कृतात्ययेऽनुशयवानिति ब्रह्मसूत्रात्तथा लाभात् । अगस्त्यादिशापेन तत्रत्यानां पूर्वसञ्चितपापोद्बोधमात्रम् । तत्रत्यानां भोगेन पुण्यक्षये रजोमलं रागादि वर्धत

एव । पुनन्त्विति मन्त्रे पुनर्वरुणप्रार्थनं तु मुख्यजलदेवतात्वात् । एष वरुणो भूतस्यातीतस्य भुवनस्य गोप्ताऽऽसीत् । मध्ये जलमध्ये वसन् । एष पुण्यकृताँल्लोकानुत्तमलोकान् । प्रयच्छतीति शेषः । तथा मृत्योर्यमस्य हिरण्मयं लोकम् । प्रयच्छतीति शेषः । द्यावा-पृथिव्योर्हिरण्मयं सुवः स्वर्गसदृशं संश्रितमस्ति । तत्र दिवि हिरण्मयं मुख्यं स्वरेव । पृथिव्यां तु तत्सदृशं राजभवनादीति विवेकः । स त्वं तत्सुवर्णोऽस्मभ्यं संशिशाधि देहि ॥ ६७-६९ ॥

**आर्द्रं ज्वलति ज्योतिरहमस्मि ।**
**ज्योतिर्ज्वलति ब्रह्माहमस्मि ॥**
**योऽहमस्मि ब्रह्माहमस्मि ।**
**अहमस्मि ब्रह्माहमस्मि ।**
**अहमेवाहं मां जुहोमि स्वाहा ॥ ७० ॥**

**धी.ती.**–॥ तिसृभिः स्नातवतः पुरुषस्याचमनार्थं मन्त्रानाहेत्येके । उत्तरा अपि मन्त्राः प्रोक्षणार्था एवेति वयम् ॥ **आर्द्रमिति** । न संसृष्टमिति यावत् । ज्वलति प्रकाशते यतः स्नानेनापगतमलोऽहं ज्योतीरूपः प्रकाशमानोऽस्मि । अभिव्यक्तज्ञानानन्दादिस्वरूपोऽह-मस्मीति यावत् । ज्योतिः प्रकाशमाने रूपे जीवे ज्वलति सति ब्रह्मा स्वयोग्यज्ञानानन्दादिपूर्णोऽहमस्मि । योऽहमस्मि यः प्रकाशित-स्वरूपः सोऽहं ब्रह्मास्मि । अहेयो मदन्तर्यामी ब्रह्म नित्यमस्तीति ज्ञानी चासम् । 'अन्तर्यामिपमीशेषमपेक्ष्याहं त्वमित्यपि । सर्वे भेदाः प्रवर्तन्ते सति भेदेप्यवस्तुषु' इति महाकौर्म्यवचनात् । 'अस्मि नित्यास्तितामानात् अहं चासावहं यत' इति वचनात् । अहमस्मि

ब्रह्माहमस्मीत्यादेः तदधीनस्तदाश्रितस्तत्सदृशो वाऽहमस्मीत्यर्थः । अहं मां अहंममताबुद्धिम् अप्सु आत्माग्नौ वा जुहोमीत्यर्थः । हे स्वाहा सुष्टु आहूयते वेदवचनैरिति स्वाहा । गोविन्दो प्रतिपाद्य इति यावत् ।। ७० ।।

**सा.आ.–** स्नानोत्तरमाचमनार्थं मन्त्रानाह ।। **आर्द्रमिति** । यज्ज्योतिर्ज्वलति तदार्द्रं जलम् । अत्र सर्वत्र ज्योतिश्शब्देन परं ब्रह्म । अथ यदतः परो दिवो ज्योतिर्दीप्यते । ज्योतिश्चरणाभि-धानादिति श्रुतिसूत्राभ्याम् । यदार्द्रं तदहमस्मि । तद्वक्ष्यति मां जुहोमीति । स्वस्मिन्नार्द्राभेदभावनापूर्वमाचमनमेवापूर्वहेतुः शास्त्र-प्रामाण्यात् । ननु आर्द्रं ज्योतिरिति युक्तम् । अग्नेरपामुत्पत्तेः कार्यकारणयोरभेदात् । यदार्द्रं तदहमिति कथमित्याशङ्क्याह ।। **ज्योतिर्ज्वलति ब्रह्मेति** । यज्ज्योतिर्ज्वलतीत्युक्तं तद्ब्रह्मैव न भूतम् । तथा चार्द्रकारणज्योतिर्ब्रह्मांशोऽहमस्मि । अत आर्द्राभेदव्यपदेशः । आर्द्रस्य तु ब्रह्मशरीरभूतस्य कारणाग्न्यभेदाद्ब्रह्माभेदव्यपदेशः । यद्वा यदार्द्रं जलं तज्ज्योतिर्ज्वलति दीप्यते । अथ यदतः परो दिवो ज्योतिर्दीप्यत इति श्रुतेः । तादृशज्योतिरात्मकम् । तथा चाचमनीयत्वेन हवीरूपं जलं ब्रह्मैवेत्युक्तं भवति । देहलीदीपन्यायेन ज्योतिरित्यस्याहमस्मीत्यनेनाप्यन्वयः । तथा च हूयमानं जलं ज्योतिरहमपि ज्योतिरस्मीत्यर्थः । तथा च होताऽपि ब्रह्मैवेत्युक्तं भवति । ननु जलस्याग्न्युपादानत्वादस्तु ब्रह्मतादात्म्यं जीवस्य तु वस्त्वन्तरस्य कथमग्नितादात्म्यमिति भ्रान्ताशङ्कायामाह ।। ज्योति-र्ज्वलति **ब्रह्माहमस्मीति** । यज्ज्योतिस्तद्ब्रह्मैव । तदंश एवाहमस्मि न तु वस्त्वन्तरमित्यर्थः । एतदेव स्पष्टयति ।। योऽहमित्यादिना

वाक्यद्वयेन । योऽर्थो ज्योतिरहमस्मीति वाक्येनोच्यते स एव ब्रह्माहमस्मीति वाक्येनोच्यते । तथा च ज्योतिरहमस्मि ब्रह्माहमस्मीति वाक्यद्वयं समानार्थमिति वाक्यद्वयार्थः । योऽहमिति वाक्येऽहमस्मीत्युत्तरवाक्ये च ज्योतिरिति शेषः ।। **अहमेवेति** । अहेयब्रह्मात्मक एवाहं मां मदात्मकं जलं जुहोमि स्वाहा । तथा च ब्रह्मार्पणं ब्रह्म हविरिति गीतावाक्यमेतत् श्रुतिमूलकं द्रष्टव्यम् । द्वितीययोजनायां मामित्यस्य मदंशि ब्रह्मात्मकमित्यर्थः । अत्र जीवस्य ब्रह्मात्मकत्वं तदंशत्वात् जलस्य ब्रह्मात्मकत्वं सर्वं समाप्नोषीति गीतोक्तदिशा । माधवोक्तयोजना तु पुनरुक्तेरवारणादक्षरस्वरसानानुगुण्याच्चोपेक्ष्या ।। ७० ।।

**अकार्यकार्यवकीर्णी स्तेनो भ्रूणहा गुरुतल्पगः ।।**
**वरुणोऽपामघमर्षणस्तस्मात्पापात्प्रमुच्यते।। ७१ ।।**

**रजोभूमिस्त्व माꣳरोदयस्व प्रवदन्ति धीराः ।। ७२ ।।**

**धी.ती.**– ।। आचमनमन्त्रानभिधायाचमानादूर्ध्वं पुनरपि स्नानमन्त्रानाह ।। **अकार्यकारीति** । अहम् अकार्यकारी अभाष्यभाषणाद्यकार्यकारी । यद्वा अकार्यः शास्त्रप्रतिषिद्धकलञ्जभक्षणादिकरणशीलः । अवकीर्णी क्षतव्रतः प्रतिषिद्धस्त्रीगन्ता वा । स्तेनस्तस्करो ब्रह्मस्वहर्ता वा । भ्रूणहा वेदवेदाङ्गविद्ब्राह्मणहन्ता । गुरुतल्पगः गुरुभार्यानुगन्ता । तादृशं मामघमर्षणः पापहारी वरुणस्तत्स्थस्तच्छब्दवाच्यो हरिश्च तस्मात्पापात्प्रमुच्यते प्रमोचयेत् । प्रपूर्वात् मुच्लृ मोक्षण इत्यतोऽन्तर्णीतो णिच् । छन्दसि लेट् ।। रजोभूमिरिति । रजोभूतः अरोदयस्वेति छेदः । अ इत्यस्य रोदयस्वेत्यनेन सम्बन्धः । तथा

चायमर्थः । यद्यप्यहं रजोभूमिः रजोगुणप्रचुरोऽविद्याबद्धः पापाश्रय इति धीरा ज्ञानिनः प्रवदन्ति । तथाऽपि मा अरोदयस्व दुःखोद्रेकं कारयित्वा तत्कार्यरोदनं मा कारय । अरोदयस्वेति प्रार्थनं न युक्तम् । सुखदुःखाभावयोरेव प्रार्थ्यत्वात् । यद्वा कृच्छ्रचान्द्रायणादि-तपःक्लेशयुक्तान्नः कुरु । इति धीराः प्रवदन्तीति ।। ७१,७२ ।।

**सा.आ.**– आचमनादूर्ध्वं पुनरपि स्नानमन्त्रमाह ।। **अकार्येति** । अवकीर्पी क्षतव्रतः । वरुणोऽपामघमर्षणः । एतदुत्तरमिति स्मृत्वाऽप्सु निमज्जन्निति शेषः । तस्मात् अकार्यकरणादिजनितात् । रहस्य-पापक्षयार्थे स्नानमन्त्रमाह ।। रज इति । धीरास्त्वं रजोभूमिः शोधनभूमिरिति वदन्ति । रजकशब्दे रञ्जधातोः शोधनार्थत्वदर्शनात् । आङोऽनुनासिकश्छन्दसीति आङोऽनुनासिकः । त्वमित्यस्य चा-वृत्तिः । त्वम् आरोदयस्व शोधयस्व । मम रहस्यपापमिति शेषः । माधवोक्तयोजना तु न युक्ता । माङः प्रश्लेषासम्भवात् । बह्वध्याहारापत्तेश्च ।। ७१, ७२ ।।

**आक्रान्त्समुद्रः प्रथमेविधर्मञ्जनयन्प्रजा भुवनस्य राजा ।**
**वृषा पवित्रे अधिसानो अव्ये बृहत्सोमो वावृधे सुवान**
**इन्दुः ।। ७३।।**

**धी.ती.**– ।। स्नानानन्तरं जप्यमन्त्रानाह ।। **आक्रानिति** ।। सम्यगुद्रिक्तत्वात्सर्वोत्तमत्वात्समुद्रः । समुत् मुदं प्रीतिं राति ददातीति समुद्रः । मुद्रया सहित इति वा समुद्रः परमात्मा । चक्रशङ्ख-श्रीवत्सादिचिन्होपेत इत्यर्थः । आक्रान् व्याप्तः पदविशेषवान्वा । विधर्मन् विधर्मिणि नामरूपादिधर्मरहिते । प्रथमे सृष्ट्यादौ । प्रजा

जनयन् । भुवनस्य चतुर्भुवनस्य तत्स्थजनस्य राजा स्वामी । भक्ताभीष्टसेचकत्वात् । वृषा सोम उत्कृष्टया मया लक्ष्म्या सहितः सोमः इन्दुरिवेन्दुश्चन्द्रसदृशः परमात्मा । सा नो । सा सः । नः अधि मयीत्यर्थः । पवित्रे शुद्धे । अव्ये रक्षणीये मयि बृहत् वृद्धिम् । बृं बृहि वृद्धाविति धातोः । सुवान सुवन्कुर्वन्नित्यर्थः । वावृधे अभिवृद्धोऽस्मान् रक्षत्विति शेषः ।

**सा.आ.–** स्नानोर्ध्वं जप्यमन्त्रमाह ।। **आक्रानिति** । समुद्रः समुद्रसदृशः । समुद्रो यथा बहुजलयुक्तस्तथा बहुमाहात्म्ययुक्तः परमेश्वरः विधर्मन् विगतो धर्मो यस्मिन् । धर्मसाधनयज्ञादीनां तदूर्ध्वमुत्पत्तेः । धर्मादनिजित्यनिच् । सुपां सुलुगिति ङेर्लुक् । विधर्मिणीत्यर्थः । ईदृशे प्रथमे सृष्ट्यादौ प्रजा जनयन् । भुवनस्य राजा । वृषा भक्ताभीष्टसेचकः । पवित्रे । अव्ये अविसदृशानां कर्मठानां हिते । अधिसाने मेरुसानौ । सुपां सुलुगिति ङेर्लुक् । नलुमतेति निषेधस्यानित्यत्वाद्धेर्ङितीति गुणः । बृहत्सोमः स इवाल्हादकः । सुवानः सर्वप्राणिप्रेरकः । इन्दुः परमैश्वर्यवान् । इदि परमैश्वर्य इति धातोः । वावृधे ववृधे । बलेः पृथिवीप्रतिग्रहोत्तरमिति शेषः । ततः पादत्रयेण लोकत्रयम् । आक्रान् आक्रान्तवान् । क्रमेर्लिङि बहुलं छन्दसीति शपो लुकि हल्ङ्याबिति तिलोपे मो नो धातोरिति नत्वम् । क्रमः परस्मैपदेष्विति दीर्घः ।। ७३ ।।

इति प्रथमोऽनुवाकः ।। १ ।।

**जातवेदसे सुनवाम सोममरातीयतो निदहाति वेदः ।**
**स नः पर्षदति दुर्गाणि विश्वा नावेव सिन्धुं**
**दुरिताऽत्यग्निः ।। १ ।।**

**धी.ती.–** ।। अथानिष्टपरिहारार्थं जाप्यमन्त्रानाह ।। **जातवेदस इति** ।। जातं सर्वं वेत्तीति जातानि वेदानि वृत्तिज्ञानानि यस्मादिति वा जातवेदा अग्न्यन्तर्गतो भगवान् । तस्मै जातवेदसे सर्वज्ञाय । अग्नये तदन्तस्थाय हरये च । सोमं सोमरसममृतं वा सुनवाम अभिषवयुक्तं करवाम । स च देवोऽस्मानरातीयतः शत्रुवदाचरतो जनान्निदहाति अतिशयेन नितरां भस्मीकरोतु । लेट् । किञ्च सोऽग्निः अतिपर्षत् अतिपर्षयति अतिशयेन नाशयति । विश्वा विश्वानि दुर्गाणि । सर्वापद इति यावत् । यथा नाविकः सिन्धुं समुद्रं नदीं वा अब्धौ सिन्धुर्नासरिति स्त्रियामिति कोशात् । नावा जनानतितारयति तथा वेदोऽग्निर्दुरितान्नः । अतितारयत्विति शेषः ।।

**सा.आ.–** अथानिष्टपरिहारार्थत्वेन जाप्यमन्त्रा उच्यन्ते । जातवेदसे जातं सर्वं वेत्तीति जातवेदास्तस्मै । सोमं सुनवाम अभिषुतं करवाम । वेत्ति सर्वमिति वेदोऽग्निः । अरातीयतोऽस्मास्वरातीत्वं शत्रुत्वमिच्छतः पुरुषान्निदहाति निदहति । किञ्च सोऽग्निर्नोऽस्माकं विश्वा दुर्गाणि सर्वा आपदः । अतिपर्षत् अतिशयेन नाशितवान् । यद्वा दुर्गाणि स्थानानि नोऽस्मान् पर्षत् प्रापयत् । यथा नाविको नावा सिन्धुं तारयति तथाऽग्निर्नो दुरिता दुरितानि । अति । यज्ञेन तारयत्विति शेषः ।। १ ।।

**तामग्निवर्णां तपसा ज्वलन्तीं**
**वैरोचनीं कर्मफलेषु जुष्टाम् ।।**

**दुर्गां देवीꣳ शरणमहं प्रपद्ये**
**सुतरसि तरसे नमः ।। २ ।।**

धी.ती.– ।। तां पूर्वोक्ताम् । येयं नवदुर्गा कल्पादिषु मन्त्रशास्त्रेषु प्रसिद्धा ताम् । अग्निवर्णां अग्निसमानवर्णाम् । तपसा ज्वलन्तीं स्वकीयेन तपसा दीप्यमानाम् । वैरोचनीं विशेषाकारेण रोचते प्रकाशत इति विरोचनः परमात्मा तत्सम्बन्धित्वाद्वैरोचनीम् । कर्मफलेषु स्वर्गपशुपुत्रादिषु निमित्तेषु जुष्टामुपासकैः सेविताम् । अहं शरणं प्रपद्ये । हे दुर्गे । स्वयं दुर्गाणि सुतरसि तीर्णा वर्तसे । अन्तर्णीतणिच् । तारयसि च परान् । अतस्ते नमः तारयित्र्यै नमः ।। २ ।।

सा.आ.– तपसा ऐश्वर्येण ज्वलन्तीं देदीप्यमानां वैरोचनीं विशेषेण रोचत इति विरोचनो नारायणस्तस्येयम् । तस्येदमित्यण् । तथा च स्मृतिः शरण्ये त्र्यम्बके गौरि नारायणि नमोऽस्तु ते । हरिनेत्रकृतालयामित्यादिः । कर्मफलेषु जननीयेषु जुष्टां अनुष्ठातृभिः सेव्याम्। हे सुतरसि दुर्गतारयित्रि तरसे तरणाय तुभ्यं नम इति योजना । तुमर्थे इत्यसेप्रत्ययः । तारयित्र्यै इत्यर्थ इति माधवेनोक्तं तु न युक्तम् । कर्तरि तदननुशासनात् ।। २ ।।

**अग्ने त्वं पारयानव्यो अस्मान्**
**स्वस्तिभिरति दुर्गाणि विश्वा ।।**
**पूश्च पृथिवी बहुला न उर्वी**
**भवा तोकाय तनयाय शंयोः ।। ३ ।।**

धी.ती.– हे अग्ने अग्निशब्दवाच्य हरे । त्वं अनव्यः प्राचीनः ।

स्वस्तिभिः क्षेमैर्विश्वा दुर्गाणि पारय पारङ्गमय । संसारस्य पारं तीरं नयेत्यर्थः । नोऽतोकाय अबालिशाय तनयाय आत्मजाय शंयोः सुखार्थः पूः निवासयोग्या पुरी साऽपि पृथिवी सविस्तीर्णा भवतु । उर्वी सस्यादिनिष्पादनयोग्यभूमिरपि बहुला भवतु ॥

**सा.आ.–** हे अग्ने त्वं नव्यः स्तुत्यः सन् । पु स्तुतावित्यतोऽचो यत् । अस्मान्स्वस्तिभिःपारय योजय । विश्वा दुर्गाणि अति । तारयेति शेषः । किञ्च नः पूः बहुला पृथ्वी उर्वी महती भव भवतु । त्वत्प्रसादेनेति शेषः । तोकाय अस्मत्पुत्राय तनयाय पुत्रपुत्राय शंयोः कल्याणस्य साधनं भवेत्यन्वयः ॥ ३ ॥

**विश्वानि नो दुर्गहा जातवेदः**
**सिन्धुं न नावा दुरिताऽतिपर्षि ॥**
**अग्ने अत्रिवन्मनसा गृणानोऽ-**
**स्माकं बोध्यविता तनूनाम् ॥ ४ ॥**

**धी.ती.–** ॥ **विश्वानि न इति** । हे जातवेदः । दुर्गहा सर्वासामापदामपहन्ता त्वम् । विश्वानि दुरिता दुरितानि सर्वाणि पापानि नावा सिन्धुं न नदीमिव । अस्मान् अतिपर्षि अतिशयेन तारयसि । हे अग्ने अत्रिवत् अत्रिरिव सर्वे मनसा गृणानो निश्चितवन्तः । अस्माकं तनूनामविता रक्षकस्सन् । बोधि मदिङ्गितं जानीहि । अनुग्रहोन्मुखो भवेति यावत् । 'भक्तानां स्मरणं विष्णोर्नित्यज्ञप्तिस्वरूपतः । अनुग्रहोन्मुखत्वं तु नैवान्यत्कचिदिष्यते' । इति वचनात् ॥ ४ ॥

**सा.आ.–** हे जातवेदः । नो दुर्गहा आपद्धन्ता । भवेति शेषः ।

तथा नोऽस्मान्विश्वानि दुरिता दुरितानि । अतिपर्षि तारयसि । नावा नाविकः सिन्धुं न सिन्धुमिव । नञ् इवार्थे । हे अग्ने । अत्रि-ऋषिवत् मनसा गृणानः सर्वेषां कल्याणं भावयन् । अस्माकं तनूनामविता रक्षिता बोधि भव । अत्रिः परमकारुणिकः सर्वेषां प्राणिनां सदा कल्याणं भावयत इति प्रसिद्धम् ।। ४ ।।

**पृतनाजित॒ँ सहमानमुग्र-**
**मग्नि॒ँ हुवेम परमात्सधस्थात् ।।**
**स नः पर्षदति दुर्गाणि विश्वा**
**क्षामद्देवो अति दुरिताऽत्यग्निः ।। ५ ।।**

धी.ती.– पृतनां परकीयसेनां जयतीति पृतनाजित्तम् । अत एव सहमानं शत्रूनभिभवन्तमुग्रं क्रूरम् । क्रोधादिकं सहमानं वा । अग्निं परमादुत्कृष्टात् सधस्थात् स्वकैर्भृत्यैः सह अवस्थानदेशात् हुवेम आवाहयामः । स न इत्यादि प्राग्वत् ।।

**सा.आ.–** पृतनाजितं सेनाजयिनम् । उग्रं रिपुं सहमानम् अभिभावयन्तम् । षह मर्षणेऽभिभवे चेति पाठात् । अग्निं परमात्सधस्थात् देवैः सह यस्मिन्स्थाने तिष्ठति तस्मात्स्थानात् । सधमादेति सहस्य सधादेशः । हुवेम आह्वयामः । सोऽग्निर्नो विश्वा दुर्गाणि आपदः पर्षत् निराकुर्यात् । पृधातोर्लेटि सिब्बहुलं लेटीति सिपिरूपम् । क्षामत् अपराधान्क्षममाणोऽग्निरतिदुरिता अतिशयि-तदुरितानि । अति अतितारयतु ।। ५ ।।

**प्रत्नोषि कमीड्यो अध्वरेषु**
**सनाच्च होता नव्यश्च सत्सि ।।**

**स्वां चाग्ने तनुवं पिप्रय-**
**स्वास्माभ्यं च सौभगमायजस्व ।। ६ ।।**

**धी.ती.–** ।। हे अग्ने । त्वमध्वरेषु ईड्यः स्तुत्यस्सन् । कं सुखं प्रत्नोषि प्रतनोषि । प्रकर्षेण करोषीति यावत् । तनोतेरुपधालोपश्छान्दसः । सनात् हविर्विभोजकात् । वन षण सम्भक्ताविति धातोः । नव्यो नूतनो होता स्तुत्यश्च । सत्सि सीदसि त्वं यागदेशे तिष्ठसि । अतो हे अग्ने । स्वां स्वकीयामपि तनुवं पिप्रयस्व अस्मदीयहविषा प्रीणय । ततोऽस्मभ्यं च सौभाग्यं शोभनभाग्योपेतत्वमायजस्व सर्वतो देहि । यज देवपूजासङ्गतिकरणदानेष्विति धातोर्लोट् ।। ६ ।।

**सा.आ.–** हे अग्ने । त्वमध्वरेष्वीड्यः स्तुत्यस्सन् । स्तोतॄणां कं सुखं प्रत्नोषि प्रतनोषि । सनाच्च चिरन्तनोऽपि । सनादित्यव्ययं चिरन्तनार्थे । नव्य इव सन् । अध्वरेषु कठिनपुरोडाशादिभक्षणाय सत्सि सीदसि । नव्यहोतृशरीरे सीदसीति वा । माधवस्तु सनात्कर्मफलदातेत्यर्थः इत्याह । षणु दान इत्यस्य रूपमिति तद्भावः । प्रकृतार्थसङ्गतस्याव्ययस्य परित्यागेन व्याकरणानिष्पाद्यस्वरूपस्य सनोतेरनुपयुक्तार्थस्य निरूपणमसङ्गतम् । हे अग्ने । स्वां तनुवं स्वकीयां तनुं पिप्रयस्व अस्मदीयहविषा प्रीणयस्व आयजस्व देहि ।। ६ ।।

**गोभिर्जुष्टमयुजो निषिक्तं**
**तवेन्द्र विष्णोऽनु सञ्चरेम ।।**
**नाकस्य पृष्ठमभिसंवसानो**
**वैष्णवीं लोक इह मादयन्ताम् ।। अ० २ ।।**

**धी.ती.–** ।। हे इन्द्र । गोभिर्धेनुभिर्जुष्टं प्राप्तम् । यद्वा गोभिः, ऐन्द्रं पयोऽमावास्यायामिति वेदवाक्यैर्जुष्टं तद्धोमीयत्वेन प्रसिद्धं पयो दधि च । अयुजः अन्यासहितस्य, अकारवाच्यविष्णुना सहितस्य वा । निषिक्तं नितरां सिक्तं आकुञ्चनद्रव्येण सिक्तं घृतसिक्तं वा । विष्णोरनु पश्चात् तद्धोमकरणानन्तरं तव सञ्चरेम होमाचरणं कुर्मः । त्वं नाकस्य पृष्ठं विस्तीर्णप्रदेशं सुधर्मसभादिकम् । अभिसंवसानः आवासं कुर्वन् । वैष्णवीं विष्णुभक्तप्रजा इहलोके मादयन्तां मादय हर्षय । व्यत्ययश्छान्दसः ।।

**सा.आ.–** हे इन्द्र । गोभिर्वेदैर्जुष्टं निषिक्तमवभृथे । ईदृशं शरीरमस्माकमयुजः त्वं योजितवात् । अतस्तव स्वामिनो विष्णोः । अनुसञ्चरेम अनुचरा भवाम । नाकस्य पृष्ठमभिसंवसानो भवान् इहलोके मा मां प्रति वैष्णवीं सम्पदं दयन्तां दयतां ददातु ।। ७ ।। अ० २ ।।

**भूरन्नमग्नये पृथिव्यै स्वाहा । भुवोऽन्नं वायवेऽन्तरिक्षाय स्वाहा । सुवरन्नमादित्याय दिवे स्वाहा । भूर्भुवस्सुवरन्नं चन्द्रमसे दिग्भ्यः स्वाहा । नमो देवेभ्यः स्वधापितृभ्यो भूर्भुवस्सुवरन्नमोम् ।। अ० ३ ।।**

**धी.ती.–** ।। महाव्याहृत्युपासितं सप्रपञ्चं भूरित्यारभ्य महरो-मित्यन्तामाह । अग्नये प्रसिद्धाय । भूः भूस्थं हविः समिधादिक-मन्नम् । अथ तदन्नप्रदायै पृथिव्यै स्वाहा सुहुतमस्तु । भगवत्पक्षे भूर्नामा स्फूर्तिरूपत्वादिति वचनात् ज्ञानरूपो भूःस्थोऽनिरुद्धः । अग्नये अन्नमुपजीव्यः । सोऽन्नं सर्वोपजीव्यत्वात् इति वचनात् ।

पृथिव्यै भूम्यै च स एवान्नं स्वाहा । वेदप्रतिपाद्यो हरिर्भुवो भुवर्लोकः । वायवे भूतवायवेऽन्तरिक्षाय च तदाश्रितप्राणिभ्यश्चान्नम् । सञ्चरणायोपजीव्यः । भगवत्पक्षे भुवो भुवि वीर्यत्वतो भुवश्शब्दवाच्यः प्रद्युम्नः । वायवे मुख्यवायवे । अन्तरिक्षस्थः प्राणिनां चान्नमुपजीव्यः । अन्तरीक्षपीयत्वेनान्तरिक्षशब्दवाच्याय हरये स्वाहा । सुवः सुवर्लोक आदित्याय तदुपलक्षितदेवेभ्योऽन्नमुपजीव्यः । तस्मै दिवे स्वाहा । भगवत्पक्षे सुवः सुबलरूपः । सुवः सुबलरूपत्वादिति भाष्यात् सुवर्लोकगतः संकर्षणः । आदित्याय अदितिपुत्रेभ्यो देवेभ्योऽन्नम् । दिवे द्योतमानाय । द्योतनाद्दिव ईरित इत्युक्तेः । हरये स्वाहा । सुहुतमस्त्वित्यर्थः । भूर्भुवस्सुवर्नामकाय चन्द्रमसे आल्हादकारिणे हरये । दिग्भ्यः सर्वाभीष्टदात्रीभ्यो दिग्देवतागतभगवन्मूर्तिभ्यश्च स्वाहा सुहुतमस्तु । देवेभ्यो नमोऽस्तु पितृभ्यः स्वधा अस्तु । भूर्भुवस्सुवरन्नं भूरादिनामकानिरुद्धादिभ्य उपजीव्याय वासुदेवाय अनन्तगुणपूर्णाय ते नमः ॥

**सा.आ.–** महाव्याहृतिसंज्ञकान्मन्त्रानाह ॥ भूरिति । भूर्भुवस्सुवरिति त्रीणि पदान्यव्ययानि । भूरिति मन्त्रप्रतिपाद्यायाग्नये तत्प्रतिपाद्यायै पृथिव्यै चान्नं स्वाहा दत्तम् । एवमुत्तरत्रापि । यद्यपि समस्तव्याहृतिदेवतात्वं प्रजापतेरन्यत्रोक्तम् । तथाऽप्येतच्छास्त्रप्रामाण्याच्चन्द्रादेरपि तथात्वम् । हुत्वा नमो देवेभ्य इति मन्त्रेण प्राङ्मुखो देवतानुपतिष्ठेत । स्वधा पितृभ्य इति दक्षिणामुखः पितॄनुपतिष्ठेत । अथ प्रार्थना । भूर्भुवस्सुव एतत्प्रतिपाद्या देवता मह्यमन्नमस्त्विति ॐ भवन्तोऽङ्गीकुर्वन्तु । एवमग्रे ॥ ३ अ० ॥

भूरग्नये पृथिव्यै स्वाहा ।
भुवो वायवेऽन्तरिक्षाय स्वाहा ।
सुवरादित्याय दिवे स्वाहा ।
भूर्भुवस्सुवश्चन्द्रमसे दिग्भ्यः स्वाहा ।
नमो देवेभ्यः स्वधा पितृभ्यो
भूर्भुवस्सुवरोम् ।। अ० ४ ।।

धी.ती.– ।। भूरग्नये इति । भूर्भुवस्सुवरिति त्रीणि पदान्यव्ययानि । तानि व्यस्तसमस्तरूपेण मन्त्रचतुष्टयरूपाणि । तत्र भूदेवतायै अग्नये अग्निस्थानिरुद्धाय । पृथिव्यै धरायै तत्स्थाय च हरये स्वाहा । भुवो वायवे भुवो देवतायै वाय सुबलरूपाय प्रद्युम्नाय । अन्तरीक्षणीयत्वा-दन्तरिक्षसंज्ञकाय हरये स्वाहा । सुवरादित्याय सुवरभिमानिदेवतायै आदित्याय तत्स्थाय सुबलरूपाय सङ्कर्षणाय दिवे द्योतमानाय स्वाहा । भूर्भुवः सुवश्चन्द्रमसे तदन्तर्गताय वासुदेवाय । दिग्भ्यो दिग्देवतान्तर्भूतेभ्यो भगवद्रूपेभ्यश्च स्वाहा । नमो देवेभ्यः स्वधा पितृभ्यः भूर्भुवस्सुवरों व्यस्तसमस्तव्याहृतिप्रतिपाद्यानिरुद्धप्रद्युम्न-सङ्कर्षणवासुदेवादयो गुणपूर्णं ब्रह्मैवेत्यर्थः ।।

सा.आ.– भूरग्नये पृथिव्या इति । अत्र हवनीयं द्रव्यमाज्यं बोध्यम् । एवमग्रे । हे अग्ने । भूर्भुवस्सुवरिति मन्त्रप्रतिपाद्यदेवता मह्यं प्रसीदन्तु मामङ्गीकुर्वन्तु ।। अ० ४ ।।

भूरग्नये च पृथिव्यै च महते च स्वाहा ।
भुवो वायवे चान्तरिक्षाय महते च स्वाहा ।।

**सुवरादित्याय च दिवे च महते च स्वाहा ।**
**भूर्भुवश्चन्द्रमसे च नक्षत्रेभ्यश्च**
**दिग्भ्यश्च महते च स्वाहा । नमो देवेभ्यः**
**स्वधा पितृभ्यः भूर्भुवस्सुवर्महरोम् ।। अ० ५ ।।**

**धी.ती.–** ।। पुनरप्यन्यपाठमाह ।। भूरग्नय इत्यादि । भूरग्नयो भूरभिमानिनेऽग्नये पृथिव्यै धरायै च । उभयत्र चशब्दात्तदन्तर्गता-निरुद्धाय चेत्यर्थः । महते महत्तत्त्वाभिमानिने आदित्याय तदन्तर्गताय सङ्कर्षणाय चेत्यर्थः । दिवे च द्युलोकाभिमानिने तदन्तर्गताय हरये च महते च स्वाहा सुहुतमस्तु । भूर्भुवस्सुवश्चन्द्रमसे समस्तव्याहृति-देवतायै चन्द्रमसे । चशब्दादाल्हादकत्वेन चन्द्रमःशब्दवाच्याय वासुदेवाय । नक्षत्रेभ्यश्च दिग्भ्यश्च महते च तदभिमानिदेवताभ्य-स्तदन्तर्गतभगवते च स्वाहा । व्यस्तसमस्तव्याहृतिप्रतिपाद्यदेवता भूरादिपितृभ्यः स्वधा तत्प्रीणनमस्तु । भूर्भुवस्सुवर्महरों सर्वजीवोत्तमाय हिरण्यगर्भाय स्वाहा । भुवो वायवे भुवर्लोकाभिमानिने वायवे तदन्तर्गताय प्रद्युम्नाय चेत्यर्थः । अन्तरिक्षाय अन्तरिक्षदेवतायै चशब्दादन्तरीक्षणीयत्वादन्तरिक्षशब्दवाच्याय हरये महते च । सुवरादित्याय सुवर्लोकाभिमानिने आदित्याय व्यस्तसमस्तव्याहृति-प्रतिपाद्यं महरिति चतुर्व्याहृतिप्रतिपाद्यं च गुणपूर्णं ब्रह्मेत्यर्थः ।।

**सा.आ.–** भूरादिप्रतिपाद्यदेवता मह्यं महः पूजा तेजो वृद्धिर्वाऽस्त्विति ॐ भवन्तोऽङ्गीकुर्वन्तु ।। अ० ५ ।।

**पाहि नो अग्न एनसे स्वाहा ।**
**पाहि नो विश्ववेदसे स्वाहा ।।**

**यज्ञं पाहि विभावसो स्वाहा ।**
**सर्वं पाहि शतक्रतो स्वाहा ।। अ० ६ ।।**

**धी.ती.–** ।। अथ प्रतिबन्धकनिवारणेन मुमुक्षोर्ज्ञानप्राप्त्यर्था होममन्त्रा उच्यन्ते ।। **पाहि न इति** । हे अग्ने । नोऽस्मान् एनसे ज्ञानप्रतिबन्धकीभूतपापात् पाहि । तुभ्यमिदं सुहुतमस्तु स्वाहा । नोऽस्माकं विश्ववेदसे कृत्स्नतत्त्वज्ञानाय पाहि तत्साधनसम्पादनेन पालय । तदर्थं तुभ्यमिदं स्वाहा सुहुतमस्तु ।। **यज्ञं पाहीति** । विशेषेण भानं दीप्तिर्विभा सैव वसु धनं यस्य स विभावसुस्तदन्तर्गतो भगवान् । हे विभावसो । यज्ञं विदुषा हेतुत्वेनास्माभिरनुष्ठीयमानं भगवत्पूजादिलक्षणं निवृत्तं कर्म पाहि निर्विघ्नेन समाप्तिं नीत्वा फलदानशक्तं कुरु । शतक्रतो पूर्णज्ञान । स क्रतुर्ज्ञानरूपत्वादिति भाष्यात् । सर्वत्र ब्रह्मज्ञानतत्साधनकर्मादिकं पाहि सफलं कुरु ।।

**सा.आ.–** पापादिनिवृत्तये चत्वारो होममन्त्रा एते । एनसे पापनिवृत्त्यै । एनः शब्दस्यैनोनिवृत्तौ लक्षणा । विश्ववेदसे विश्वज्ञानाय । विभावसो अग्ने ।। अ० ६ ।।

**पाहि नो अग्न एकया पाह्युत द्वितीयया ।।**
**पाह्यूर्जं तृतीयया पाहि गीर्भि-**
**श्चतसृभिर्वसो स्वाहा ।। अ० ७ ।।**

**धी.ती.–** ।। हे अग्ने अग्न्यन्तर्गतश्रीभगवन् । एकया व्याहृत्या भूरित्यादिकया मां पाहि । द्वितीयया भुवरित्यादिकया व्याहृत्या पाहि । तृतीयया सुवरित्यादिकया व्याहृत्या ऊर्जमन्नं तदुपलक्षितभोग्यं सर्वं पाहि । चतसृभिः भूर्भुवस्सुवर्महरिति गीर्भिर्व्याहृतिभिः । हे

वसो । वस निवासे वस आच्छादन इति धातोरुप्रत्यये वसुराच्छादकः सर्वत्र विद्यमानश्च । हरे पाहि तुभ्यं स्वाहा ।।

सा.आ.– एकया 'पाहि नो अग्न' इति प्रथमया । द्वितीयया 'पाहि नो विश्ववेदसे' इत्यनया । ऊर्जमन्नं बलं वा । अन्नमयं यज्ञं वा । चतसृभिः पाहि नो अग्न इत्यादिभिः । होमोत्तरमेते चत्वारो मन्त्राः प्रार्थनार्थाः ।। अ० ७ ।।

**यश्छन्दसामृषभो विश्वरूपश्छन्दोभ्यश्छन्दाꣳस्याविवेश ।।**
**(सतां) सचा शिक्यः प्रोवाचोपनिषदिन्द्रोज्येष्ठ इन्द्रियाय ।।**
**ऋषिभ्यो नमो देवेभ्यः स्वधा पितृभ्यो**
**भूर्भुवस्सुवश्छन्द ॐ ।। अ० ८ ।।**

धी.ती.– ।। अथ ब्रह्मविद्याप्रतिपादककृत्स्नवेदान्तप्राप्तिकामेन जप्यमन्त्रानाह ।। **यश्छन्दसामिति** । यश्छन्दसां वेदानां मध्ये ऋषभः श्रेष्ठः प्रणवस्तत्प्रतिपाद्यः परमात्मा विश्वरूपः पूर्णरूपः । विश्वं पूर्णमिहोच्यत इति वचनात् । व्याप्तरूपो वा तादृशप्रणवश्छन्दोभ्यो वेदेभ्यः । प्रथमं प्रादुर्बभूवेति शेषः । सिसृक्षोः परमाद्विष्णोः प्रथमं द्वौ विनिस्सृतौ । ओङ्कारश्चाथशब्दश्च तस्मात्प्राथमिकौ क्रमादिति वचनात् । छन्दोभ्य आविर्भूतं सत् । छन्दांसि छन्दोपलक्षित-सर्वमन्त्रादौ आविवेश च प्रथमतोऽन्ते च प्रयोज्यो बभूवेत्यर्थः । 'ब्रह्मणः प्रणवः कार्य आदावन्ते च सर्वशः । स्रवत्यनोङ्कृतं ब्रह्म परस्ताच्च विशीर्यत' इति श्रुतेः । तेन प्रणवेन प्रतिपाद्य इन्द्रः परमैश्वर्ययुक्तः परमात्मा ज्येष्ठः कारणत्वेन सर्वस्मात्प्रथमः । सतां शिक्यः सद्भिर्ज्ञानकर्मवद्भिरुपासकैर्ज्ञानिभिश्च प्राप्तुं शक्यः । उपनिषत्

उपनिषदं ब्रह्मविद्यां पुरोवाच पूर्वं ब्रह्मणे चतुर्मुखाय । किन्त्विन्द्रियाय इन्द्रियाभिमानिदेवताभ्यो ऋषिभ्यः पुरोवाचेति पूर्वेण सम्बन्धः । नमो देवेभ्य इत्यादि गतम् । अत्रैव भूर्भुवस्सुवश्छन्द ओमिति पठन्ति ।।

**सा.आ.–** यः प्रणवश्छन्दसां वेदानां मध्ये ऋषभः श्रेष्ठो विश्वरूपः सर्ववेदात्मकः । छन्दोभ्यः । समुद्धृत इति शेषः । यथा दध्नो नवनीतमुद्धृतं भवति तथा छन्दांस्याविवेश । स च प्रणवः आङ् आ सम्यक् अभिव्याप्तौ वा । आङोऽनुनासिक इत्यनुनासिकः । शिक्यः शिक्य इव सर्वाधारः । पुरोवाच । यदुवाच तन्निर्दिशति । **उपनिषदिति** । उपनिषद्रूप इन्द्रः सर्ववेदवरिष्ठो ज्येष्ठः प्रशस्ततरोऽहमिति । इन्द्रियाय इन्द्रियाभिमानिने ऋषिभ्यश्च प्रोवाच । ऋषिभिरुपनिषद्विचारः सदा कार्य इति तात्पर्यम् । देवेभ्यो नमोऽहं पितृभ्यः स्वधाऽहमित्युवाचेति योजना । देवेभ्यो हविर्दानाय नमोऽन्तो मन्त्रः प्रयोक्तव्यः, पितृभ्यो हविर्दानाय स्वधान्तः प्रयोक्तव्य इति तात्पर्यम् । नम इति स्वाहाशब्दस्योपलक्षणम् । भूर्भुवस्सुवर्व्याहृतित्रयात्मकश्छन्दो वेदत्रयात्मकश्च ॐ प्रणव इत्यर्थः

।। अ० ८ ।।

**नमो ब्रह्मणे धारणं मे अस्त्वनिराकरणं धारयिता भूयासम् । कर्णयोः श्रुतं मा चोढ्वं ममामुष्य ॐ ।।**

**अ०९ ।।**

**धी.ती.–** ।। अथ लब्धानां वेदविद्यार्थानामविस्मरणाय जप्यमन्त्रानाह ।। **नमो ब्रह्मण इति** । ब्रह्मणे परब्रह्मणे नमोऽस्तु । तदनुग्रहेण मे मदीये मनसि वेदतदर्थयोर्धारणमस्तु । अनिराकरण-

मविस्मरणं यथा भवति तथा धारयिता भूयासम् । अमुष्य इत्थं प्रार्थयमानस्य मम कर्णयोः श्रोत्राभ्यां यत्किञ्चिद्वेदशास्त्रतदर्थादिकं यदा कदाचिदपि श्रुतमस्ति तत्सर्वम् । हे देव । चोढ्वं मा विनाशय । ॐ गुणपूर्णं परं ब्रह्म । चिरं धारयिष्यामीति शेषः ।।

**सा.आ.–** अथ श्रुतस्याविस्मरणाय जप्यमन्त्रमाह ।। **नमो ब्रह्मण** इति ।। ब्रह्मणे हिरण्यगर्भाय नमः । सरस्वतीपतित्वात्तन्नमनम् । अनिराकरणं निराकरणरहितं धारणं मेऽस्तु । श्रुतस्य धारयिताऽहं भूयासमिति धारणायां पुनः प्रार्थनाऽऽदरार्था । एतस्य विवरणं कर्णयोरिति । मां चोढ्वं मा च्युतत् । पुरुषवचनव्यत्ययश्छान्दसः । ममामुष्य ॐ स्थिरधारणाङ्गीकारोऽस्तु ।। अ० ९ ।।

**ऋतं तपः सत्यं श्रुतं तपः शान्तं तपो दमस्तपः शमस्तपोदानं तपो यज्ञं तपो भूर्भुवरस्सुवर्ब्रह्मैतदुपास्यैतत्तपः ।। अ० १० ।।**

**धी.ती.–** ।। अथोदाहृतसत्यादीनां तपसां ब्रह्मस्वरूपत्वं तदुपास्तिं तत्साधनत्वं च प्रतिपादयति ।। **ऋतमिति** । ऋतं यथार्थं विज्ञानरूपं तपो ब्रह्मैव । सत्यं सद्भावप्रापकम् । श्रुतं वेदान्तशास्त्रश्रवणं तपः । शान्तिः क्षान्तिस्तपः । दम इन्द्रियनिग्रहस्तपः । शमो भगवन्निष्ठता-बुद्धिस्तपः। दानमन्नदानादिकं यज्ञमग्निहोत्रज्योतिष्टोमादिकमेतत्सर्वं तपः। भूर्भुवस्सुवर्ब्रह्मैव तदुपास्य एतत्तपः एतद्ब्रह्मोपास्यमित्यर्थः । ऋतं क्षान्त्यादितपसामेतासां ब्रह्मोपासनरूपमुख्यतपस्साधनत्वमुक्तं भवति ।।

**सा.आ.–** ऋतादिकं विना पुण्यकर्मणः । सम्यक् फलाजनकत्वात् ऋतादिकं प्रथमं तपोरूपतया शंसति ।। **ऋतमिति** । ऋतं मानसं, सत्यं वाचिकं यद्वा ऋतं साधुशब्दः सत्यमर्थतः । श्रुतं शास्त्रश्रवणं,

शान्तं शान्तिः कामक्रोधादिवैधुर्यं, दमो बाह्येन्द्रियनिग्रहः शमोऽन्तः-करणनिग्रहः । यज्ञं यज्ञः । भूर्भुवस्सुवः एता व्याहृतीः। ब्रह्म प्रणवं वेदं वा । एतदुपास्य एतदुपासनं कुरु । एतत्तपः ।। अ० १० ।।

**यथा वृक्षस्य सम्पुष्पितस्य दूराद्गन्धो वात्येवं पुण्यस्य कर्मणो दूराद्गन्धो वाति ।। यथाऽसिधारं कर्तेऽवहिता-मवक्रामेद्यद्युवे युवे हवा विह्वयिष्यामि कर्तं पतिष्या-मीत्येवममृतादात्मानं जुगुप्सेत् ।। अ०११ ।।**

धी.ती.– अथ विहितानुष्ठानरूपं पुण्यं निवृत्तं ज्ञानसाधनतपः प्रशंसति । तत्त्वस्यातिगोपनीयत्वं चाह ।। **यथेति** ।। लोके वृक्षस्योद्यानादौ स्थितस्य चम्पकपाटलादिपुष्पोपेतस्य सम्यग्विकसित-पुष्पोपेतस्य यथा गन्धः सुरभिर्दूराद्दूरदेशाद्वाति वायुना सह गच्छति । एवं पुण्यस्य कर्मणो ज्योतिष्टोमादेर्गन्धः पुण्यकीर्तिर्दूरान्मनुष्य-लोका-त्स्वर्गादिकं गच्छति । तस्मात् पुण्यमनुष्ठेयम् । गोपनीयं पापादिकं च न कर्तव्यमित्युभयत्र यज्ञदृष्टान्तमाह ।। **यथेति** । कर्ता छेदादि-क्षुरवृत्तिः पापकर्ता वा । हितामिष्टामसिधारां खड्गधारां यदि युवे युवे प्रति प्रतियुवपुरुषे । विव्हयिष्यामि चित्तवैकल्यं करिष्यामीति । अवक्रामेद्युद्धे प्रसक्ते सत्यसिं गृहीत्वा । कर्ता प्रपतिष्यामीति यथाऽसिधारां जुगुप्सेत् गोप्तुमिच्छेत् । तथा अमृतान्मोक्षार्थमिति यावत् । एवमात्मानमात्मतत्त्वं जुगुप्सेत् गोप्तुमिच्छेत् । सभाचत्वरादौ ब्रह्मविद्याविष्कारं न कुर्यादित्यर्थः । विद्या ह वै ब्राह्मणमाजगाम गोपाय मामिति अनाविष्कुर्वन्नन्वयात् इति श्रुतिसूत्राभ्यां विद्याया अतिगोप्यत्वोक्तेः । यद्वा गर्तेऽवहितां कुशलपुरुषेण स्थापितामसिधारा-

मवक्रामेद्यदाऽऽक्रमिष्यामि तदा विव्हयिष्यामि विव्हलो भविष्यामीति यथा पुरुषो भीतस्तत्र गन्तुं नेच्छति । तत एवमात्मानं स्वात्मान-मनृतादिपापाज्जुगुप्सेत् । तत्र जुगुप्सा नाम स्वस्येहलोके परलोके च निरययातनादिप्रदमिति विदित्वा तत्परित्यजेदित्यर्थः ॥

**सा.आ.–** गन्धो वाति वायुना सहागच्छति । एवं पुण्यस्य कर्मणो गन्धः कीर्तिलक्षणो गन्धो दूराद्वाति देशाद्देशान्तरं गच्छति तस्मात् पुण्यमनुष्ठेयम् । तत्राप्यात्मानं संरक्ष्य पुण्यमनुष्ठेयमित्याह । **यथेति** । यथा कर्ते गर्ते अवहितं निहितामसिधारामवक्रामेत् अवक्रामेद्यः स यथा विचार्य प्रवर्तते तथा कर्मसु प्रवर्तेत । विचारमेव निर्दिशति ॥ **यद्युव इति** । यत् यदि युवेऽसिधारां सम्यक् पदा क्रामामि तदा पादच्छेदेन हवा निश्चयेन विव्हयिष्यामि महत्कष्टं प्राप्स्यामि । यद्यद्युवे युवे सर्वथा पदा नाक्रामामि तदा कर्तं गर्तं पतिष्यामि । तस्माल्लघुतां धारामाक्रम्य गच्छामीत्येवं विचार्य प्रवर्तते । एवममृतात् अमृतसदृशा-त्कर्मण आत्मानं जुगुप्सेत् रक्षेत् । छान्दसः स्वार्थे सन् । बहु-कर्मानुष्ठाने भूयान् कायक्लेशः सर्वथा कर्मत्यागे प्रत्यवायगर्ते पात इत्येवं विचार्य नित्यनैमित्तिकयोरेव प्रवर्तितव्यमवशिष्टकालेऽध्यात्म-विचारः कार्य इति भावः ॥ अ० ११ ॥

**अणोरणीयान्महतो महीयानात्मा गुहायां निहितोऽस्य जन्तोः ॥**
**तमक्रतुं पश्यति वीतशोको धातुः प्रसादान्महिमानमीशम् ॥१॥**

**धी.ती.–** ॥ परमात्मापरोक्षदर्शनं हरिगुरुप्रसादायत्तमित्याह ॥ **अणोरणीयानिति** । स पूर्वोक्तः परमात्माऽस्य परिदृश्यमानस्य जन्तोः प्राणिनः । एकवचनं जात्यभिप्रायेण । परिदृश्यमानानां प्राणिनामिति

यावत् । गुहायां हृदयगुहासु । अणोः प्रकृतिसूक्ष्मात् अणीयान् अत्यन्ताणुः । महतो अव्याकृताकाशमहत्तत्त्वादपि महीयान् परममहत्परिमाणयुक्तः । आत्मा अन्तर्यामी जीवान्तर्यामी । 'जीवान्तर्यामिको विष्णुरात्मनामा समीरित' इत्येकादशस्कन्धतात्पर्यवचनात् । निहितः हृदयगुहायां प्रविष्टोऽस्ति । ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ परमे परार्ध इति, गुहां प्रविष्टावात्मानौ हि तद्दर्शनादिति श्रुतिसूत्राभ्यां तत्सिद्धेः । तमक्रतुं क्रतूपलक्षितकर्माद्यगम्यमीशं तन्महिमानं च पश्यति साक्षात्कुरुते । धातुः प्रसादात् भगवतश्चतुर्मुखस्य च प्रसादात् । वीतशोकोऽपगतसंसारादिक्लेशो मुक्तो भविष्यतीत्यर्थः । 'ज्ञानप्रसादेन विशुद्धसत्त्वा' इति 'ज्ञानं चतुर्मुखात्प्राप्य' इति श्रुतिस्मृतिसिद्धत्वादुक्त एवार्थः ।।

सा.आ.– आत्मा परमात्माऽस्य जन्तोर्जीवस्य गुहायां हृदयगुहायां निहितः सर्वत्र स्थितोऽपि हृदये रविमण्डल इव विशेषेणाभिव्यक्त इत्यर्थः । अक्रतुं स्वार्थसङ्कल्परहितमीशं परमेश्वरं पश्यति साक्षात्करोति । अस्य महिमानं च पश्यति । तदा धातुः परमेश्वरस्य प्रसादाद्वीतशोको भवति । तथा च श्रुत्यन्तरम् । जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोक इति । एतेन स्वाभेदेन पश्यतीत्यर्थः इति निरस्तम् ।। १ ।।

**सप्त प्राणाः प्रभवन्ति तस्मात्**
**सप्तार्चिषः समिधः सप्त जिव्हाः ।।**
**सप्त इमे लोका येषु चरन्ति**
**प्राणा गुहाशयां निहितास्सप्त सप्त ।। २ ।।**

धी.ती.– भगवत इन्द्रियादिजगत्सर्जकत्वमहिमानमाह ।। **सप्त प्राणा इति** । तस्माद्धरेः सकाशात् सप्त प्राणा बुद्ध्या सह सप्त ज्ञानेन्द्रियाणि सप्त तदभिमानिदेवताश्च प्रभवन्ति उत्पद्यन्ते । सप्तार्चिषो ज्ञानेन्द्रियवृत्तयः समित्स्थानापन्ना द्वन्द्वविषयाः सप्त जिव्हा इन्द्रियाणां विषयैः सह सम्बद्धाश्च । इमे परिदृश्यमानाः सप्त लोका इन्द्रियगोलकाः सप्त । के के लोका इत्यत आह ।। **येष्विति** । येषु स्थित्वा प्राणा इन्द्रियाणि चरन्ति विषयसम्बद्धा भवन्ति ते लोका इन्द्रियगोलकास्तदभिमानिनो देवाश्च तस्माद्भगवतः प्रभवन्तीति पूर्वेण सम्बन्धः । गुहाशयां गुहाशयायाम् । लोपः समान इति सूत्रादेकयकारलोपः । बुद्ध्यर्थं गुहा हृदयगुहा आश्रयः स्थानं यस्यास्तस्यां बुद्धौ । निमित्तसप्तमी । प्राणिनां ज्ञानप्राप्त्यर्थं सप्त सप्त प्रतिशरीरमिन्द्रियाद्या निहिता इत्यर्थः । यद्वा यज्ञसाधनीभूता अर्चिषोऽग्नेर्ज्वालाः समिधः पलाशादयः सप्त जिव्हाः । अग्निजिह्वानां सप्तत्वमाथर्वणिकैराम्नायते ।

'कालीकराली च मनोजवा च सुलोहिता चापि सुधूम्रवर्णा ।
स्फुलिङ्गिनी विश्वरुची च देवी लेलायमाना इति सप्त जिह्वाः'

इति । ताश्च परमात्मन उत्पद्यन्ते । इमे भूरादयः सप्त-सङ्ख्याकास्तस्मात्प्रभवन्ति । तेषु लोकेषु देवमनुष्यादिशरीरवर्तिनः प्राणाश्चरन्ति । तादृशलोका उत्पन्ना इति सर्वत्रान्वयः । गुहाशयात् हृदयगुहायां शेते वर्तत इति गुहाशयः परमात्मा । तस्मात् सप्त सप्त सप्तसङ्ख्याकाः सप्त समुद्राः सप्त द्वीपाः सप्त कुलाचलाः सप्त रूपाणि पातालादिसप्तलोकाः सप्त भूरादयश्च सप्त सूर्यस्य सप्ताश्वाश्च जातास्तिष्ठन्तीत्यर्थः ।।

**सा.आ.–** तस्मात्परमेश्वरात् सप्त प्राणाः । चक्षुरादीनि पञ्चज्ञानेन्द्रियाणि मनोबुद्धित्येवं सप्तेन्द्रियाणि । अन्ये तु 'सप्त वै शीर्षण्याः प्राणा' इति श्रुतेः शिरोवर्तिसप्तच्छिद्रगताः सप्तसङ्ख्याकाश्चक्षुरादय इत्याहुः । प्रभवन्ति उत्पद्यन्ते । सप्तर्चिष इन्द्रियगताः स्वस्वविषयप्रकाशनशक्तयः । समिधः शब्दादयो विषयास्तैरिन्द्रियाणि समिद्धयन्ते । सप्त जिव्हाः सप्तेन्द्रियैर्विषयाणां सम्बन्धाः । यद्वा प्रसिद्धाग्नेरेव सप्तार्चिषः प्रसिद्धसमिधश्च । सप्तजिह्वाः 'कालीकराली च मनोजवा च सुलोहिता या च सुधूम्रवर्णा । स्फुलिङ्गिनी विश्वरुची च देवी लेलीयमाना इति सप्त जिह्वा' इत्याथर्वणाम्नाताः प्रसिद्धाग्नेः सप्त जिह्वाः । सप्त इमे लोका भूर्भुवस्सुवर्महर्जनस्तपः सत्यमिति । येषु लोकेषु तत्स्थशरीरेषु प्राणाः पूर्वोक्ताश्चरन्ति ते लोका इत्यन्वयः। अत्र सर्वत्र तस्मात्प्रभवन्तीति सम्बन्धः । अत्र प्रायेण सप्तसङ्ख्याकानामेवेश्वरादुत्पत्तेर्विवक्षितत्वादग्निं विहाय तदीयार्चिरादीनामेव ग्रहणम् । ननु कर्मेन्द्रियाणामपि सत्त्वात्सप्तेन्द्रियाणीति कथमित्याशङ्क्याह ।। **गुहाशयामिति** । शरीरगुहाशया बुद्धिस्तामपेक्ष्य प्रतिशरीरं निहिताः सप्त सप्त प्राणा इत्युक्तमिति न दोष इत्यर्थः । माधवस्तु गुहाशयादिति छित्वा गुहाशयात्परमेश्वरात्सप्त सप्तऋषयः सप्त समुद्राश्च निहितास्तत्र व्यवस्थिता इत्यर्थमाह । तन्न शोभनम् । सप्तगतेर्विशेषितत्वाच्चेति सूत्रानानुगुण्यात् । गतेर्ज्ञानस्यापेक्षयेन्द्रियाणि सप्तेत्युक्तम् । गुहाशयां निहिता इति विशेषितत्वाच्चेति तदर्थः । कथञ्चिदन्यथा सूत्रयोजनायामाह । एकस्येति । एकस्य सप्तेत्यस्य समुद्रा इत्यर्थेऽतः समुद्रा इत्यनेन पौनरुक्त्याच्च । उत्पत्त्युक्त्यैव निधानस्य लाभात् । सर्वनाम्नैवात्र परमेश्वरस्य निर्दिष्टत्वेन गुहाशयपदेन तन्निर्देशोक्तेरसङ्गतत्वाच्च । प्रकृतप्राणानामेव सप्तत्वनिर्देशस्य युक्तत्वाच्च ।। २ ।।

**अतः समुद्रा गिरयश्च सर्वेऽस्मात्स्यन्दन्ते सिन्धवः सर्वरूपाः ॥ अतश्च विश्वा ओषधयो रसाश्च येनैष भूत-स्तिष्ठत्यन्तरात्मा ॥ ३ ॥**

**धी.ती.–** अत इति । अतः परमेश्वरात् उक्ताः समुद्रा गिरयश्चास्मात् तस्मात् सर्वरूपा नानारूपाः सिन्धवः सरितः स्यन्दन्ते प्रस्रवन्ति । अतश्च प्रस्रवणेनैव । ओषधयो व्रीह्यादयः फलपाकान्ता रसाश्च मधुररसादयः फलेषु येन रसेन अन्तरात्माऽ-न्तर्यामी भगवांस्तिष्ठति । तद्रसादिकमपि परमात्मन उत्पन्नमिति पूर्वेण सम्बन्धः । आभ्यामृग्भ्यां परमात्मनः सर्वजगत्सर्जकत्वमहिमा विशदीकृतः । अथवा अतः परमात्मनः सकाशात् । समुद्राः क्षीरोदधिप्रभृतयः समुद्रविशेषा मेरुप्रभृतयो गिरिविशेषाश्च । अस्मा-त्परमेश्वरात् सर्वे प्रभवन्ति । गङ्गागोदावर्यादयः सर्वरूपा बहुविधा नद्योऽस्मात् परमेश्वरादुत्पन्नाः स्यन्दन्ते प्रवहन्ति । ओषधयो मधुराम्लादिरसाश्च प्रभवन्ति ॥

**सा.आ.–** अतः परमेश्वरात् । समुद्राः । अत्रापि सप्त प्रभवन्तीत्यनुवर्तते । सर्वे गिरयश्च । इत ऊर्ध्वं प्रभवन्तीत्ये-तन्मात्रमनुवर्तते । सिन्धवो नद्यः सर्वरूपा गङ्गादिरूपा येन परमेश्वरेण तत्प्रसादेन । एष भूतो भूतसम्परिष्वक्त आत्मा जीवोऽन्तः शरीरान्तस्तिष्ठति । अतः परमेश्वरात् । विश्वा ओषधयो रसाश्च प्रभवन्तीत्यन्वयः । यत्तु येनौषधिरसेन भूतः सम्बद्ध इति माधवेनोक्तं तन्न । रसानां बहुवचनान्तशब्देन प्रक्रान्तत्वेन येनेत्येकवचनान्तेन परामर्शायोगात् ॥ ३ ॥

ब्रह्मा देवानां पदवीः कवीना-
मृषिर्विप्राणां महिषो मृगाणाम् ।।
श्येनो गृध्राणाꣳ स्वधितिर्व-
नानाꣳ सोमः पवित्रमत्येति रेभन् ।। ४ ।।

धी.ती.– परब्रह्मज्ञानं धातुः प्रसादायत्तं तस्य प्रथमं ज्ञानमार्ग-प्रदर्शकत्वादिति भावेनाह ।। ब्रह्मेति । कवीनां ज्ञानिनां काव्यादि-कर्तॄणां वाल्मीक्यादीनां वा । ब्रह्मा चतुर्मुखः पदवीः मार्गप्रदर्शकः । विप्राणां ब्राह्मणानामृषिर्नारदो वेदव्यासो वा । पदवीरिति सर्वत्र सम्बध्यते । व्यासस्य धर्मज्ञानमार्गप्रदर्शनार्थमवतीर्णत्वात् । तदुक्तं गीताभाष्ये । नष्टधर्मज्ञानलोककृपालुभिरित्यादिना । तस्य वेदविभाग-ब्रह्मसूत्राष्टादशपुराणेतिहासकरणादिना धर्मज्ञानमार्गप्रदर्शकत्वात् । यद्वा सङ्क्षेपेण भगवद्विभूतिरूपाण्याह ।। ब्रह्मा देवानामिति । देवानां रुद्रादीनां मध्ये ब्रह्मा भगवद्विभूत्यंशभूतः । यद्वा कवीनां काव्यकर्तॄणां पदवीः पदं सुशब्दविशेषव्युत्पादकं व्याकरणशास्त्रं तदभिज्ञो भगव-द्विभूत्यंशः । विप्राणां वैदिकमार्गवर्तिनां मुनीनामृषिर्व्यासो भजव-द्विभूत्यंशः । मुनीनामप्यहं व्यास इति गीतोक्तेः । मृगाणां वन्यचतुष्पदां मध्ये शक्त्याधिक्ययुक्तो महिषो भगवद्विभूत्यंशः । गृध्राणां गृध्रोपलक्षितपक्षिणां मध्ये श्येनो, वनानां वृक्षसमूहरूपाणां छेदनार्थः स्वधितिः परश्वायुधविशेषो वा विभूत्यंशो बभूव । यज्ञसाधनत्वात् । सोमो, रेभन् धर्मं जनयन् । रेभो रवणे धर्मे चेति कोशात् । पवित्रं पावित्र्यम् । भावप्रधानो निर्देशः । यद्वा पवित्रं पावित्र्यकारणीभूतं गङ्गाजलकुशादिद्रव्यम् । अत्येति अतिक्रम्य वर्तते । सोमो यागे प्रधानो भवति । भगवद्विभूत्यंशसन्निधानात् ।।

**सा.आ.–** सर्वश्रेष्ठं परमेश्वरमभिधाय तत्तज्जातीयेषु श्रेष्ठमाह ।। **ब्रह्मेति** । कवीनां ज्ञानिनां पदवीः पदमीश्वरस्वरूपं वेत्ति जानाति सः श्रेष्ठ इति सर्वत्राध्याहारः । वी गतीत्यस्मात् क्विपि रूपम् । महिषः स इव वृषभः । गृध्राणां पक्षिणां मध्ये । स्वधितिः स्वधितिरिव हिंसकः । रेभन् सर्वेषु पक्षिषु तूर्ष्णीं तिष्ठत्सु शब्दं कुर्वाणः । एवं विधः श्येनः श्रेष्ठः । वनानामोषधीनां सोमः श्रेष्ठः । ननु कुशादिकमपि पवित्रमस्तीति कथमयं श्रेष्ठ इत्यत आह ।। **पवित्रमिति** । यतः पवित्रं कुशादि अत्येति सोमोऽतः श्रेष्ठ इत्यर्थः । कुशादिकं यागेऽङ्गद्रव्यम् । सोमस्तु प्रधानद्रव्यमित्यत्येतीति बोध्यम् । माधवोक्तयोजनात्व सङ्गतेति स्पष्टमेव ।। ४ ।।

**अजामेकां लोहितशुक्लकृष्णां**
**बह्वीं प्रजां जनयन्तीꣳ सरूपाम् ।।**
**अजो ह्येको जुषमाणोऽनुशेते**
**जहात्येनां भुक्तभोगामजोऽन्यः ।। ५ ।।**

**धी.ती.–** विरजो निर्मुक्त इति विशेषातिरेकेण रजोगुणोपलक्षित-तत्प्रकृतिबन्धनिर्मुक्तत्वमुक्तं तद्विशदयति ।। **अजामिति** । जगदुपादानमूलकारणभूतां प्रकृतिमुपजीव्य बन्धमुक्तव्यवस्था प्रदृश्यते । प्रकृतिरूपा त्रिगुणात्मिकाऽविद्या । एतां लोहितशुक्लकृष्णां वर्णत्रयोपेताम् । रजोगुणस्वरूपं रक्तम् । रजो रागात्मकं विद्धीति गीतोक्तेः। शुक्लं सत्त्वं, कृष्णं तमसो रूपम् । बह्वीं महदहङ्कारसुरनरतिर्यगादि रूपेण बहुविधाम् । सरूपां प्रकृतिविकृत्यात्मना सदृशीं प्रजां जनयन्तीमुत्पादयन्तीं प्रकृतिं जुषमाणः सेवमानः कश्चिदेको जीवोऽजः

स्वरूपत उत्पत्तिशून्यो जीवः । तस्याप्यविद्यावदनादित्वात् । तादृशो जीवो द्विविध आसक्तो विरक्तश्चेति । ययोर्मध्ये पूर्वोक्तो जीवोऽजां त्रिगुणात्मिकां प्रकृतिं जुषमाणः प्रीतिपूर्वकं सेवमानोऽनुशेते तदनुसारेणैव भुञ्जानो विवेकरहितो जन्ममरणरूपेण संसरतीत्यर्थः । अन्यो विरक्तो जीवो भुक्तभोगामेनामविद्यां जहाति परित्यजति । विरक्तेः प्रागेव भोगान्भुक्त्वा विवेकेन तां बाधत इत्यर्थः । अनेनासक्तविरक्तव्यवस्था कथिता मुक्तामुक्तभोगाश्च कथिताः ॥

सा.आ.– परस्परं जीवानां भेदमाह ॥ **अजामिति** । अजां न जायत इत्यजा जडप्रकृतिः । छागीति केचित् । लोहितशुक्लकृष्णां रजस्सत्त्वतमोमयीमित्यर्थ इति केचित् । तेजआदिकार्यात्मकत्वाल्लोहितादिरूपेत्यन्ये । तथा हि छान्दोग्ये — यदग्ने रोहितं रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत्कृष्णं तदन्नस्येति । अन्नशब्देनात्र पृथिवी । सरूपां स्वसदृशीम् । अजो जीवः । न जायत इति व्युत्पत्तेः । जुषमाणः । अजामित्यनेनान्वयः । सेवमान इत्यर्थः । अनुशेते अनुसरति । भुक्तभोगां भुक्ता भोगा यस्यां ताम् । अन्योऽजो विरक्तो जीवः । एतेन मायाध्वंसो मुक्तिरित्यपास्तम् । हानमात्रस्यात्रोक्तेः । एकेन परिगृहीताया एवापरेण हानोक्तेश्च । न हि नष्टायाः परिग्रहः सम्भवति । एकमुक्तौ सृष्ट्यनापत्तेश्च । न च मायामन्तरेण सृष्टिः । अजामेकाम् इत्येकत्वोक्तेः ॥ ५ ॥

**ह९सः शुचिषद्वसुरन्तरिक्षसद्धोता**
**वेदिषदतिथिर्दुरोणसत् ॥**
**नृषद्वरसदृतसद्व्योमसदब्जा**
**गोजा ऋतजा अद्रिजा ऋतं बृहत् ॥ ६ ॥**

**धी.ती.–** भगवति भक्त्यर्थं तन्महिमान्तराण्याह ॥ **हंस इति ।** हंसः सूर्यो दोषवर्जितत्वसाररूपत्वाभ्यां हंसशब्दवाच्यस्तदन्तर्गतो विष्णुश्च । हंसः सूर्ये खगे विष्णाविति कोशात् । शुचिषत् शुचौ वायावग्नौ चास्तीति शुचिषत् । शुचिशब्दोपपदात् अस्तेः शतृप्रत्यये श्नसोरल्लोप इत्यल्लोपे षत्वे च शुचिषदिति रूपम् । वसुः उत्तम-सुखरूपः । वरं सुखं यस्येति विग्रहे पदद्वयम् । अन्त्यलोपो निरुक्तत्वात् । अन्तरिक्षसत् अन्तरिक्षस्थः । होता होतृस्थो जुहोति शब्दादिविषयाननुभवतीति वा इन्द्रियादिस्थो हरिर्होतेत्युच्यते । वेदिषत् वेद्यां पूज्यतयाऽस्तीति वेदिषत् । पूर्ववद्रूपम् । अतिशयितं थमन्नं यस्यासावतिथः स एवातिथिः । अन्नादमिति सम्प्रोक्तमिति वचनात् । दुरोणसत् सोमरसपात्रे द्रोणकलशे तिष्ठतीति दुरोणसत् । यद्वा अतिथिरूपेण द्रोणेषु परकीयगृहेष्वस्तीति दुरोणसत् । नृष्वस्तीति नृषत् । वरेषु ब्रह्मादिष्वस्तीति वरसत् । प्रत्ययार्थजनके वेदेऽस्तीति ऋतसत् । व्योम्नि व्योतमस्यां जगदिति जगदाधारभूता श्रीर्व्योमे-त्युच्यते । व्याङ्पूर्वात् ऊयी तन्तुसन्तान इति धातोरधिकरणे सनूप्रत्यये गुणे यलोपे व्योमेति सिद्धेः । तस्यामस्तीति व्योमसत् । अप्सु जायन्त इत्यब्जानि तेष्वास्त इत्यब्जा । अब्जशब्दोपपदादास्तेः क्विप्प्रत्यये सकारस्य रुत्वे विसर्गे च सवर्णदीर्घे चाब्जा इति भवति । एवमुत्तरत्र । गोषु जातेषु क्षीरादिष्वास्त इति गोजा । ऋतजा मुक्तजनादिषु स्थः । ऋतेषु भगवन्तं प्राप्तेषु मुक्तेषु जातानि ज्ञानानि तत्रास्त इति ऋतजा । अद्रिजातेष्वासत इत्यद्रिजाः । ऋतं मुख्यतो वेदप्रतिपाद्यं यथार्थज्ञानादिरूपम् । बृहत् गुणपूर्णं ब्रह्मेत्यर्थः । उक्तेऽर्थे निर्दोषः साररूपश्चेत्यादि काठकभाष्योक्तं मानमिति ।

**सा.आ.–** हंसः परमेश्वरः । शुचौ सीदतीति शुचिषत् । वसति सर्वस्मिन्निति वसुः । जुहोतीति होता । वेद्यां सीदतीति वेदिषत् । अतिथिः अतिथिरिव दुरोणे गृहे सीदतीति दुरोणसत् । अतिथिरिव गृहे यो वसति स ईश्वरविभूतिरित्यर्थः । अतिथिरिव नमस्यः । दुरोण-सदित्यस्य दुरोणे यज्ञगृहे सीदतीत्यर्थः इत्यन्ये । नृषु सीदतीति नृषत् । अत्र सर्वत्र पूर्वपदादिति षत्वम् । वरे देशे सीदतीति वरसत् । ऋते कर्मणि सीदतीति ऋतसत् । अप्सु गोषु ऋतेषु अद्रिषु जायत इति विग्रहः । बृहदृतं च हंस इत्यन्वयः ।। ६ ।।

**घृतं मिमिक्षिरे घृतमस्य योनि-**
**र्घृते श्रितो घृतमुवस्य धाम ।**
**अनुष्वधमावह मादयस्व स्वाहा-**
**कृतं वृषभ वक्षि हव्यम् ।। ७ ।।**

**धी.ती.–** ।। इतः परं परैर्यस्माज्जाता न परा नैव किञ्च-नेत्यादिऋग्द्वयमधिकमुदाहृत्य व्याख्यातम् । अद्या नो देव सवित इत्यारभ्य मधुमान्नो वनस्पतिर्माध्वीर्गावो भवन्तु न इत्यन्तं षट् ऋचः प्रथमं पठित्वा घृतं मिमिक्षिर इति ऋक्पाठमङ्गीकृत्य व्याख्यातम् । वयं त्विदानीन्तनपद्धतितः पाठानुसारेण घृतं मिमिक्षिर इत्यारभ्य व्याख्यास्यामः । घृतं प्रसिद्धघृतं दीप्यमानं ब्रह्म वा । घृ क्षरणदीप्त्योरिति धातोः कर्मणि क्तः । देवा यजमाना मिमिक्षिरे मातुं सेक्तुं ज्ञातुं वेच्छामकुर्वन् । कुतः । अस्य यज्ञस्य योनिर्यतः कारणीभूतम् । घृतेनाग्नेर्ज्वालाभिर्वृद्धिदर्शनात् । अतोऽयमग्निर्घृते श्रितो घृतमाश्रित्यावस्थितः । घृतमेवास्याग्नेः स्थानं धाम तेजोहेतुर्वा ।

यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकमिति गीतोक्तेः । अनुष्वधं स्वाहाकारस्वधाकारानुसारेण स्वाहाकृतमावह स्वीकुरु । तेन स्वीकारेण मादयस्व आत्मानं हर्षय । मदि हर्ष इति धातोः ॥

**सा.आ.–** घृतं मिमिक्षिरे पूर्वे यजमाना आहवनीयाग्नौ घृतं सिक्तवन्तः । मिक्षिः सेचनार्थः । अस्याग्नेर्घृतं योनिः कारणम् । घृतेन ज्वालावृद्धेः । अतोऽयमग्निर्घृते श्रितो घृतमुवस्य धाम घृतमेवास्य स्थानम् । इयङादिप्रकरणे तन्वादीनामिति उञः उवङादेशः । अनुष्वधं स्वधामन्नमस्मसीयहवीरूपमनुसृत्य आवह देवानत्रानय । स्वधाशब्दप्रयोगमनुसृत्य कव्यमावह स्वीकुरु वा । मादयस्व देवान् पितॄन् हृष्टान्कुरु । त्वं हृष्टो भवेति वा । स्वाहाकृतं स्वाहाशब्देन दत्तं हव्यम् । हे वृषभ अग्ने वक्षि वहसि प्राप्नोषि देवान्प्रति प्रापयसि वा । अध्यात्ममेवं योजना । घृतं दीप्तिमद् ब्रह्म शिष्येषु मिमिक्षिरे सेचिरे ज्ञानिनः । अस्य जगतः श्रितः सर्वः पदार्थोऽस्य जगतो धाम लयस्थानम् । अनुष्वधं मदीयश्रद्धामनुसृत्य मामावह स्वीकुरु । मां मादयस्व हृष्टं कुरु । हे वृषभ सर्वश्रेष्ठ परमेश्वर । स्वाहाशब्देन दत्तं हव्यं वहसि । चतुर्भिश्च चतुर्भिश्चेत्यादिस्मृतेः । यज्ञभुगिति स्मृतेश्च ॥ ७ ॥

**समुद्रादूर्मिर्मधुमाꣳ उदारदुपाꣳ शुना सममृतत्वमानट् ॥ घृतस्य नाम गुह्यं यदस्ति जिह्वा देवा नाममृतस्य नाभिः ॥ ८ ॥**

**धी.ती.–** ॥ समुद्रात् समुद्रवदतिप्रभूतात्समुद्रिक्तात् । परमात्मन ऊर्मिसदृशः प्रपञ्चः । मधुमान् भोग्यत्वेन माधुर्ययुक्तः । उदारत्

उदगच्छदुत्पन्न इत्यर्थः । यथा लोके समुद्रात्तरङ्गा उत्पद्यन्ते एवं परमात्मनो भोगार्थं समस्तप्रपञ्चादिकमुत्पन्नम् । घृतस्य । घृ क्षरण इति धातोः । दीप्तस्य परमात्मनो यन्नाम प्रणवरूपं रामकृष्णादिनाम वा । रामावतारकमिति प्रसिद्धेः । तत्ते पदं सङ्ग्रहेण ब्रवीमीति प्रणवस्य ब्रह्मनामत्वस्य कठवल्ल्युक्तेः । तेन प्रणवादिरूपेण मन्त्रेण ध्यानकाले उपांशुना सममृतत्वं शनैरुच्चार्यमाणेन अमृतत्वं उत्पत्ति-शून्यादिलक्षणं मोक्षम् । समानट् सम्यगानशे प्राप्नोषीत्यर्थः । तच्च प्रणवादिनाम देवानां जिह्वा देवैर्ध्यानपरैर्निरन्तरमुच्चार्यमाणत्वेन जिह्वेव सर्वदा मुखमध्ये वर्तते । अमृतस्य मुक्तवर्गस्य नाभिः रथचक्रस्य नाभिरिवाश्रयभूतं च । अनेन प्रणवादिजपेन मुक्तिरूपं फलं प्राप्यते । 'प्रणवेन हरिं ध्यायन्ब्रह्मलोकं समेत्य च । ज्ञानं चतुर्मुखात्प्राप्य मुच्यते नात्र संशय' इति वचनात् । अत एव कठैराम्नातम् । 'एतदेवाक्षरं ज्ञात्वा यो यदिच्छति तस्य तत्' इति ।।

**सा.आ.–** समुद्रात् तन्निष्पन्नायाः कामधेनोः क्षीरसमुद्राद्वा मधुमान् माधुर्यरसवान् मधुसदृशघृतवान्वा । ऊर्मिः पयस्तरङ्ग उदारत् निर-गच्छत् । पयसो घृतं निरगच्छदित्यपि बोध्यम् । घृतमुपांशुना उपांशुयागेन देवमुखे गतं सत् । अमृतत्वमानट् प्राप । अमृतस्य गुह्यं वेदमन्त्रस्थितं यद् आज्यमिति नामास्ति तद्देवानां जिह्वेव मुखे तिष्ठति । यागसाधनमन्त्रेषु प्रायेणाज्यपदस्यैव सत्त्वात् । तच्चामृतस्य नाभिरिव चक्रनाभिरिवाश्रयः। इदं सर्वं शब्दार्थयोरभेदविवक्षायाम् ।।८।।

**वयं नाम प्रब्रवामा घृतेना-**
**स्मिन्यज्ञे धारयामा नमोभिः ।।**

**उप ब्रह्मा शृणवच्छस्यमानं**
**चतुःशृङ्गोऽवमीद्गौर एतत् ।। ९ ।।**

**धी.ती.–** घृतस्य परमात्मनो, नाम प्रणवादिकमस्मिन्यज्ञे ज्ञानयज्ञे घृतेन दीप्यत्वेन परमात्मना तदर्थभूतेन निमित्तेन नमोभिः सह नाम प्रब्रवामा सर्वदा प्रकर्षेण परमात्मानं ध्यायन्त उच्चारयाम । मनसि ब्रह्मतत्त्वं सर्वदा धारयाम । ज्ञानस्य यज्ञत्वं भगवद्गीतायामुक्तम् । 'स्वाध्यायज्ञानयज्ञाश्च यतयः शंसितव्रता' इति । शस्यमानमस्माभिः प्रणवेन स्तूयमानम् । उप ब्रह्मणः समीपवर्तिभिश्चतुःशृङ्गश्चतुर्मुखो गौरो गोरवर्णोपेतो ब्रह्मा शृण्वत् श्रुतवान् । श्रुत्वा चावमीत् ज्ञातवान् । यद्वा उप ब्रह्म ब्रह्मणः समीपे शस्यमानमेतत्प्रणवादिनामा गोरो गोरवर्णोपेतश्चतुःशृङ्गश्चतुःशृङ्गोपेतोऽग्निरशृणवत् श्रुत्वा चावमीत् अवगतवानित्यर्थः ।।

**सा.आ.–** वयमपि तन्नाम प्रब्रवामा । घृतेनास्मिन्यज्ञे धारयाम देवान्यजाम । नमोभिर्नमस्कारैश्च यजाम । उप समीपे ब्रह्मा यस्य सः । आहवनीयसमीपे ब्रह्मणोऽवस्थानात् । ऋत्विजा शस्यमान-माशृणवत् शृण्वन् । गौरो गौरवर्णश्चतुःशृङ्गोऽग्निः । एतत् महो देव इत्यादि वक्ष्यमाणमवमीत् वान्तवान् उक्तवानित्यर्थः ।। ९ ।।

**चत्वारि शृङ्गा त्रयो अस्य पादा**
**द्वे शीर्षे सप्त हस्तासो अस्य ।।**
**त्रिधा बद्धो वृषभो रोरवीति**
**महो देवो मर्त्यां आविवेश ।। १० ।।**

त्रिधा हितं पणिभिर्गुह्यमानं
गवि देवासो घृतमन्वविन्दन् ।।
इन्द्र एकꣳ सूर्य एकं जजान
वेनादेकꣳ स्वधया निष्टतक्षुः ।। ११ ।।

धी.ती.– चतुःशृङ्गः क इत्यत आह ।। चत्वारीति । अधिभूतेऽर्थेऽग्नेः शृङ्गाश्चत्वारि, पादास्त्रयोऽस्य द्वे शीर्षे सप्त हस्तासो हस्ताः । सप्त ज्वाला एव हस्तस्थानीयाः । त्रिधा दक्षिणाग्निगार्हपत्याहवनीयादिरूपेण त्रिधा बद्धो वृषभः श्रेष्ठो रोरवीति शब्दायमानो वर्तते । यः महोदेवस्तेजसां स्वामी । महस्तूत्सवतेजसोरिति कोशात् । एतादृशोऽग्निर्वैश्वानररूपेण वा । अमर्त्यान् आविवेश प्रविष्टो वर्तते । अधिदैवविषये । चत्वारिशृङ्गा ऋगादिवेदाश्चत्वार एव शृङ्गाः प्रधानभूता अस्य यज्ञपुरुषस्य । त्रयः पादाः प्रातर्माध्यन्दिनसायमिति सवनत्रया एव पादाः । द्वे शीर्षे प्रायणीयोदयनीयाख्ये द्वे शिरःस्थानीये । सप्त सप्त छन्दासि हस्तस्थानीयानि तैर्मन्त्रैः सप्तच्छन्दस्कैराहुत्याद्यादानात् । त्रिधा बद्धो मन्त्रब्राह्मणकल्पैः स्तुतिभिर्बद्धः सम्बद्धो वृषभः श्रेष्ठो रोरवीति स्तोत्रशस्त्रोद्गानरवैर्ऋत्विङ्मुखात्स्तूयते । महो देव उत्सवतेजसोः स्वामी पूजाफलप्रदो वा । एतादृशो मर्त्यान् तदुपलक्षितप्राणिनो वैश्वानररूपेणाविवेश प्रविष्टोऽभूत् । तदुक्तं भागवतषष्ठस्कन्धतात्पर्ये पञ्चदशेऽध्याये–

'चत्वारिशृङ्गा वेदास्तु पादास्त्रिसवनानि च ।
प्रायणीयं शिरस्त्वेकमन्यश्चोदयनीयकम् ।
हस्तास्तु सप्त छन्दांसि यैर्गृह्णाति फलान्यसौ ।
मन्त्रब्राह्मणकल्पैस्तु त्रिधाबद्ध इतीर्यते ।

शास्त्रोद्गानस्तुतिरवै रोरवीत्यृत्विजो मुखात् ।
ऋषभो महान्स्वधर्मत्वाद्देवस्तु फलभावनात्'

इति । परमात्मविषये चैतत् – चत्वारिशृङ्गा अनिरुद्धादयः शृङ्गाः प्रधानभूताः अस्य मूलरूपिणो नारायणस्य त्रयो विश्वतैजसप्राज्ञाः पादा अंशाः । द्वे शीर्षे आत्मान्तरात्मारूपे शीर्षे शिरःस्थानीये । अस्य मूलरूपिणः सप्तलोकस्था भूरादिनामका भगवद्रूपविशेषा हस्ता हस्तस्थानीयाः । त्रिधा बद्धः पातालभूम्यन्तरिक्षात्मना बद्धः सम्बद्धो वृषभः सर्वश्रेष्ठो मूलरूपी रोरवीत्यतिशयेन प्रतिपाद्यो भवति । महो देवो तेजसां स्वामी मर्त्यान् अन्तर्यामिरूपेणाविवेश ।

पणिभिस्त्रिधा हितं विश्वतैजसप्राज्ञात्मना देहे हितं निक्षिप्तम् । पणिभिः । पणिर्व्यवहारे स्तुतौ चेति धातोः व्यवहर्तृभिर्वा स्तोतृभिर्गवि वेदवाक्यैर्गुह्यमानं परमरहस्यत्वेन गोप्यमानं घृतं दीप्तं स्वप्रकाशं ब्रह्म देवासोऽन्वविन्दन् अजानन् । के देवा अजानन्नित्यत आह ।। **इन्द्र एकमिति** । एकं विश्वाख्यं रूपमिन्द्रो जजान ज्ञातवान् सूर्य । एकं तैजसाख्यं रूपं जजान । वेनात् वाति गच्छतीति वायुः वा गतिगन्धनयोरिति धातोः कर्तरि औणादिको डप्रत्ययः । स इनः स्वामी येषां ते वेना वायुप्रधाना देवाः । सुलुगिति जस आदादेशः। स्वधया स्वावस्थितया प्राज्ञमूर्त्या सह । स्वस्मिन्धीयत इति स्वधा प्राज्ञमूर्तिस्तया । निष्टतक्षुः नितरां ततक्षुः तनूकृतवन्तः स्वल्पतया ज्ञातवन्तः । तक्ष तनूकरण इति धातोः । वाय्वाद्या देवाः प्राज्ञमूर्तिं ज्ञातवन्त इति भावः ।।

**सा.आ.**– एतदेव विवृणोति ।। **चत्वारीति** । शृङ्गाः शृङ्गाणि ।

हस्तासो हस्ताः । आज्जसेरसुक् । त्रिधा त्रिषु गार्हपत्याहवनीयदक्षिणाग्निषु बद्धः सम्बद्धो, वृषभो वर्षणात् । रोरवीति भृशं रौति वक्ति । किं वक्तीत्यत आह । महः पूज्यो देवः श्रीनारायणो मर्त्यान्मनुष्यान् आविवेश ।

त्रिधा हितं गवि दुग्धे दध्नि च निहितम् । पणिभिस्तन्नामकैरसुरैर्गुह्यमानं घृतम् । गवि देवासो देवा अन्वविन्दन् अलभन्त । तत्रेन्द्र एकं भागं जजानोत्पादितवान् । वृष्ट्यौषधिप्रादुर्भावे तद्भक्षणेन गोषु दुग्धं ततो घृतमिति क्रमेण । सूर्य एकं भागं जजान । आदित्याज्जायते वृष्टिरिति स्मृतेः । वेनात्तन्नाम्नो राज्ञ एकमेकोंऽशः । एवं हि स्मर्यते । वेनस्य बाहुमन्थनेन जातः पृथुः निगूढौषधिप्रादुर्भावं चकारेति । तत् घृतं स्वधया स्वधास्वाहाकारादिभिर्होमेन निष्टतक्षुः तनूचक्रुः । ब्राह्मणा इति शेषः । आज्यस्य होमे विनियोगेनाल्पता कृतेत्यर्थः । महो देव इत्यारभ्य निष्टतक्षुरित्यन्तमग्निवाक्यम् ।

अध्यात्ममेवं योजना – समुद्रात् तत्सदृशात्परमेश्वरात् । ऊर्मिः पञ्चमहाभूताद्यूर्मिः । उदारत् निरगच्छत् । उपांशुना प्रणवगायत्र्यादिमहामन्त्राणामुपांशुजपेन कश्चित्पुरुषधौरेय ऊर्मेनिर्गत्य अमृतत्वमानट् प्राप । घृतस्य दीप्तिमतः परमेश्वरस्य गुह्यं नाम ॐ तत् सत् ब्रह्म नारायण इत्येवमादि यदस्ति तद्देवानां सदा जिह्वा सम्बद्धम् । अमृतस्य मोक्षस्य नाभिरिव रथचक्रमिव वयं च तन्नाम प्रब्रवाम । घृतेन परमेश्वरेण सह अस्मिन्ध्यानयज्ञे नाम धारयाम । ईश्वरनाम चतुर्थ्यन्तं कृत्वा नमोभिर्नमःशब्दैः सह धारयाम । ब्रह्मा हिरण्यगर्भोऽपि उप समीपे वेदैः शस्यमानमीश्वरं तन्नाम च शृणवत्

शृण्वन् । चतुःशृङ्गश्चतुःशृङ्गसदृशमुखो गौरः शुद्धश्च । एतदीश्वरनाम । अवमीत् उच्चचार । अस्य परमेश्वरस्य चत्वारि शृङ्गा महर्जनस्तपः-सत्यमित्येते चत्वारो लोकाः शृङ्गाणीव । त्रयः पादा भूर्भुवस्सुवरिति त्रयो लोकाः पादाः । द्वे शीर्षगतनेत्रे वा शीर्षे सूर्याचन्द्रमसौ । सप्त हस्तासः सप्त समुद्रा हस्ताः । त्रिधा बद्धो वेदत्रयसम्बद्धः कालत्रयसम्बद्धो वा । रोरवीति पुनः पुनर्वक्ति । किमिति । महोदेवो महान्परमेश्वरो मर्त्यान् आविवेशेति । त्रिधा त्रिषु स्थानेषु हृदये रविमण्डलेऽग्नौ चेति हितं निहितम् । पणिभिः स्तुत्यैर्ज्ञानिभिः। पणेः स्तुत्यर्थत्वात् । गुह्यमानं गोप्यत्वेन स्थापितं घृतं ब्रह्म देवासो देवा गवि वेदे । अन्वविन्दन् अलभन्त । वेदा ह्येवैनं वेदयन्तीति श्रुतेः । इन्द्रो ब्रह्मणः समीपे स्थित्वा परब्रह्मण एकं पादं जजान जग्राह । सूर्य एकम् । याज्ञवल्क्येन सूर्यात्पञ्चदशशाखापरिग्रहात्स ज्ञानी । वेनो नाम गन्धर्वो महाज्ञानीति प्रागुक्तम् । तस्माद्ब्रह्मण एकः पादः । अभिव्यक्त इति शेषः । ऋष्यादयश्च स्वधया मननेन निष्टतक्षुर्निष्कृष्य जगृहुरिति ॥ १०,११ ॥

**यो देवानां प्रथमं पुरस्ता-**
**द्विश्वाधि यो रुद्रो महर्षिः ॥**
**हिरण्यगर्भं पश्यत जायमान९ँ स नो देवः-**
**शुभया स्मृत्या संयुनक्तु ॥ १२ ॥**

**यस्मात्परं नापरमस्ति किञ्चि-**
**द्यस्मान्नाणीयो न ज्यायोऽस्ति कश्चित् ॥**
**वृक्ष इव स्तब्धो दिवि तिष्ठत्येक-**
**स्तेनेदं पूर्णं पुरुषेण सर्वम् ॥ १३ ॥**

**धी.ती.–** ।। उक्तार्थे भगवत्स्मृतिं दद्यादिति रुद्रान्तर्गतं भगवन्तमर्थयते ।। **य इति** ।। यो रुद्रस्तदन्तर्गतः परमात्मा महर्षि-र्महाज्ञानी प्रथमं पश्यत अपश्यत् । स रुद्रो नोऽस्माकं शुभया स्मृत्या भगवत्स्मरणेन संयुनक्तु संयोजयतु । स्मृतेः शुभत्वं नाम मोक्षाद्यखिलपुरुषार्थप्रदत्वेनेति ज्ञातव्यम् ।

शुभया स्मृत्या संयुनक्त्वित्युक्तशुभस्मृतिविषयपरब्रह्मस्वरूपं पुनराह ।। **यस्मादिति** । यस्मात्तु हरेरपरमन्यत्परं उत्तमं किञ्चिन्नास्ति । यथा वृक्षोऽश्वत्थादिर्गमनागमनरहितस्तिष्ठति । तस्मात्परमात्मनोऽ-णीयोऽणुपरिमाणोपेतं वस्तु नास्ति । ज्यायो महत्परिमाणं कश्चित् किञ्चिन्नास्ति । यथा वृक्षोऽश्वत्थादिर्गमनागमनरहितः स्तब्धो वर्तते तथाऽयमपि परमात्मा स्तब्धोऽचञ्चलः सन् दिवि तदुपलक्षितसर्वत्रैकः समाभ्यधिकरहितः स्तब्धस्तिष्ठति । तेन परमात्मनेदं परिदृश्यमानं जगत्पूर्णं पूरितम् । देशतो व्याप्तमिति यावत् । अनेन समाभ्यधिकरहितमणोरणीयो महतो महान्तं सर्वोत्तमं सर्वत्र व्याप्य विद्यमानं नारायणाख्यं परं ब्रह्म भक्तैः स्मरणीयमिति भावः ।।

**सा.आ.–** अत ऊर्ध्वग्रन्थ ईश्वरमाहात्म्यप्रतिपादनपरः । देवानां प्रथमं जायमानं हिरण्यगर्भं यो रुद्रः पुरस्तात्पूर्वं पश्यत अपश्यत् । स देवो नोऽस्मान् शुभया स्मृत्या संयुनक्त्वित्यन्वयः । रुद्रस्य विशेषणं विश्वाधिय इत्यादि । इदानीन्तनवैदिकानां तालव्योपधपाठः प्रामादिकः । ओष्ठ्योपध एव पाठः । द्वयोर्लिपिसाम्यात्तु वैदिकास्तथा भ्रान्त्या पेठुः । विश्वाधिक इति द्रविडानां पाठः । महर्षिः सर्वज्ञः।

अस्मात्परं नास्ति । अपरं किञ्चिदस्त्येवेत्यर्थः । अत एव

नञन्तरानुपादानम् । स्तब्धः सृष्ट्यादिव्यापाररहितः । इच्छामात्रेणैव सृष्ट्यादिसम्भवेन कुलालादेरिव व्यापारानपेक्षणात् । तदंशानामेव स्रष्टृत्वं न तस्येति पातालखण्डे प्रकारान्तरमुक्तम् । दिवि वैकुण्ठे । तथा च श्रुत्यन्तरम् । त्रिपादस्यामृतं दिवीति । ब्रह्मसूत्रं च- उपदेशभेदान्नेति चेन्नोभयस्मिन्नप्यविरोधादिति । पूर्णं व्याप्तम् । अत्र रुद्रो नारायणः । पुरुषेण सर्वमिति निरुपपदपुरुषशब्दात् । रुद्रे तु तत्पुरुषशब्द एव श्रुतिषु प्रयुज्यते न सः । ऊर्ध्वरेतमित्यादौ क्वचित्प्रयुज्यमानोऽपि पदान्तरसमभिव्याहारेणैव रुद्रबोधकः । किञ्च हिरण्यगर्भोत्पादकत्वं तस्यैव श्रुतिस्मृत्योः प्रसिद्धं न रुद्रस्य । किञ्चैतद्विवरणरूपेण सहस्रशीर्षमित्युत्तरानुवाकेन नारायणस्यैव प्रतिपादनादत्रापि स एवोच्यते । न च तस्य कथं तत्प्रतिपादकत्व-मभिधानाभावादिति वाच्यम् । यो देवानां नामधा एक एवेति श्रुतेरेवाभिधानरूपत्वात् । अजस्य नाभावध्येकमिति वाक्यशेषबलेन यो देवानामित्यस्य नारायणपरत्वात् । एतेन श्वेताश्वतरोपनिषदि रुद्रस्य हिरण्यगर्भोत्पादकत्वमयुक्तमित्यपास्तम् । तत्रापि रुद्रेशानादि-पदैर्नारायणस्यैवोक्तदिशा प्रतिपादनादिति तत्त्ववादिनः । परे तु तामसरुद्रस्येश्वरत्वात्तदभिप्रायेणैतस्य श्वेताश्वतरस्य च सामञ्जस्य-मित्याहुः ।। १२,१३ ।।

**न कर्मणा न प्रजया धनेन**
**त्यागेनैके अमृतत्वमानशुः ।।**
**परेण नाकं निहितं गुहायां**
**विभ्राजदेतद्यतयो विशन्ति ।। १४ ।।**

**धी.ती.–** परमात्मप्राप्तिलक्षणो मोक्षः कर्मादिना न भवति । किन्तु सर्वसङ्गपरित्यागलक्षणसन्न्यासेनेत्याह ।। **न कर्मणेति** । कर्मणा काम्यकर्मणा । अमृतत्वमिति सम्बध्यते । अमृतत्वं कर्मणा न सम्भवति । नास्त्यकृतः कृतेनेति श्रुत्यन्तरात् । प्रजया पुत्रादिना धनेन द्रविणादिना चामृतत्वं न भवति । किन्तु त्यागेन सर्वसङ्ग-परित्यागलक्षणसन्न्यासेन । एके मुख्याः सन्न्यासिनो ज्ञानिनोऽमृतत्व-मानशुः प्राप्नुवन्ति । अतश्च सर्वसङ्गपरित्यागेन ज्ञानं सम्पादनीय-मित्यर्थः । सर्वसङ्गपरित्यागेन प्राप्तममृतत्वं किम्भूतमित्यत आह ।। **परेणेति** । गुहायां हृदयगुहायां नाकं परेण स्वर्गादुत्कृष्टं सत् निहितं स्वेच्छया सन्निहितं विभ्राजत् प्रकाशमानम् । एतत् अणोरणीया-नित्यादिना हृदयगुहानिहितत्वेनोक्तं परं ब्रह्म विशन्ति प्रविशन्तीत्यर्थः ।।

**सा.आ.–** नाकं स्वर्गं परेण पुरस्तात् । एनबन्तमेतत् । एनपा द्वितीयेति षष्ठ्यर्थे द्वितीया । गुहायां वैकुण्ठे योगिनां हृदये वा निहितं विभ्राजत् यो देवानां प्रथममिति श्रुत्या प्रतिपादितं परं ब्रह्म यतय एव विशन्ति न कर्मादिसक्ताः । कुत इत्यतः पूर्वार्धं न कर्मणेति । त्यागेनेति पुत्रकलत्रादिषु रागपरित्यागेन । श्रुतिषु गीतायां च तत्र तत्र वीतरागा इति मुमुक्षुविशेषणात् ।। १४ ।।

**वेदान्तविज्ञानसुनिश्चितार्थाः**
**सन्न्यासयोगाद्यतयः शुद्धसत्त्वाः ।।**
**ते ब्रह्मलोके तु परान्तकाले**
**परामृतात्परिमुच्यन्ति सर्वे ।। १५ ।।**

**धी.ती.–** ।। केवलं सर्वसङ्गपरित्यागमात्रेण तत्प्रवेशो न किन्तु वेदान्तश्रवणादिजनितापरोक्षज्ञानेनेत्याह ।। **वेदान्तेति** । वेदान्तानामुपनिषदां विज्ञानेन श्रवणमननादिलक्षणेन । सुनिश्चितार्थाः परापरतत्त्वनिश्चयशालिनः । यद्वा । वेदानामन्तो निर्णयो यस्मात्तस्मान्मीमांसाशास्त्राज्जातेन विज्ञानेन सुनिश्चितार्थाः । सन्न्यासयोगात् भगवति सर्वकर्मणां समर्पणाख्ययोगादुपायात् । शुद्धसत्त्वाः शुद्धान्तःकरणाः । एते सर्वेऽपि यतयो यत्नशीला अपरोक्षज्ञानिनो ब्रह्मलोकेषु सत्यलोकेषु स्थित्वा तदुपदेशानन्तरमाब्रह्मकल्पम् । तत्रोषित्वेति शेषः । परान्तकाले पराख्यब्रह्मायुषोऽन्तकाले परामृतात् प्रकृतिबन्धात् । यद्वा परामृतात्परमात्मनः प्रसादादित्यर्थः । मुख्यामृतः स्वयं राम इतीशावास्यभाष्यात् सर्वे पूर्णसाधनाः। परिमुच्यन्ति मुक्ता भवन्ति ।।

**सा.आ.–** न केवलं वीतरागतामात्रं मोक्षहेतुः किन्तु वेदान्तज्ञानमपीत्याह ।। **वेदान्तेति** । वेदान्ता उपनिषदस्तज्जन्यं यद्विज्ञानं तेन सुनिश्चितः परमेश्वररूपोऽर्थो यैरिति विग्रहः । सन्न्यासयोगाच्छुद्धसत्त्वाः शुद्धान्तःकरणा यतयः । एतस्य विशन्तीति पूर्वेणान्वयः । ब्रह्मणि प्रवेश एवामृतत्वं नान्यदित्युक्तं भवति । तेषां मुक्तिक्रममाह ।। **त इति** । ते यतयो ब्रह्मलोके सत्यलोके । गत्वेति शेषः । परान्तकाले द्वितीयपरार्धस्य समाप्तिकाले परामृतात् परं पदममृतं ब्रह्म तत्प्रसादात् । सर्व इति त इत्यस्य विशेषणम् । मुच्यन्ति मुच्यन्ते । बन्धेनेति शेषः । तथा च स्मृतिः । 'ब्रह्मणा सह ते सर्वे सम्प्राप्ते प्रतिसञ्चरे । परस्यान्ते परात्मानः प्रविशन्ति परं पदम्' इति । प्रतिसञ्चरः प्रलयः । परात्मानः परब्रह्मगतचित्ताः ।। १५ ।।

दह्रं विपापं परवेश्मभूतं
यत्पुण्डरीकं पुरमध्यसꣳस्थम् ॥
तत्रापि दह्रं गगनं विशोक-
स्तस्मिन्यदन्यस्तदुपासितव्यम् ॥ १६ ॥

**धी.ती.–** मुक्तिसाधनीभूतं दहरोपास्तिमाह ॥ दह्रमिति । यदेतत्पुण्डरीकमष्टदलहृत्कमलमस्ति तत् दह्रं अल्पं परवेश्मभूतं परस्य श्रेष्ठस्य परमात्मनो वेश्मभूतं गृहरूपम् । पुरस्य करणाद्यवयवोपेतस्य शरीरस्य, मध्ये कुक्ष्युरसोरन्तरा स्थितम् । तत्रापि तत एव विपापं भगवदधिष्ठानादेव पापरहितं यत्पुण्डरीकं तत्रापि दह्रम् स्वल्पगगन-माकाशे वर्तते । तस्मिन्गगने विशेकं शोकादिदोषरहितं यदन्तरस्ति ब्रह्मरूपमात्माऽन्तरात्माख्यम् । तत् उपासितव्यं सर्वैरुपास्यम् । आत्मान्तरात्मेति हरिरेक एव द्विधा स्थित इति भाष्योदाहृत-प्रमाणात् । तस्यैव बिम्बत्वान्मोचकत्वाच्च । समोऽपि भगवान्स्व-बिम्बदर्शन एवैनं मोचयतीति न्यायविवरणोक्तश्रुतेः । आत्मरूपस्यैव बिम्बत्वात् । बिम्बस्य हरिरात्मेति नामद्वयमुदाहृतमिति तात्पर्य-वचनात् ॥

**सा.आ.–** न केवलं वेदान्तविज्ञानमात्रेण मोक्षः किन्तु ध्यानात्मकोपासनाविशेषादित्याह ॥ **दह्रमिति** । दह्रं सूक्ष्मं विपापं विपापब्रह्मस्थानत्वात् । परवेश्मभूतं परस्य ब्रह्मणो गृहभूतम् । पुरमध्यसंस्थं देहाख्यपुरस्य मध्ये विद्यमानं यत्पुण्डरीकमस्ति । तत्र विद्यमानं दह्रं स्वल्पं गगनं यदस्ति तस्मिन्नन्तः विशोको विशोकं यद् ब्रह्मास्ति तदुपासितव्यं ध्यातव्यम् । तथा च छन्दोगाः समामनन्ति । अथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाश-

स्तस्मिन्यदन्तस्तदन्वेष्टव्यं तद्वाव विज्ञासितव्यमिति । दहरदह्रशब्दौ च पर्यायौ । तथा च ब्रह्मसूत्रम् । दहर उत्तरेभ्य इति । सूत्रे दहरे इति सप्तम्यन्तपदच्छेदः ।

शङ्कराचार्यानुयायिनस्तु सूत्रे दहर इति प्रथमान्तच्छेदः । श्रुत्योर्दहरदह्रशब्दौ तत्समानाधिकृतगगनाकाशशब्दौ च ब्रह्मपरौ । तैत्तिरीयश्रुतौ विशोक इति गगनमित्यनेनान्वेति । श्रुत्योस्तस्मिन्यदन्तरिति वाक्ययोस्तस्मिन्नित्यनेन हृत्पुण्डरीकपरामर्श इति वदन्ति । एतन्मते श्रुत्योस्तस्मिन्यदन्तरित्यस्य वैयर्थ्यम् । न च पूर्वमते एतद्व्याख्यानरूपाग्रिमतैत्तिरीयश्रुतौ तस्यान्ते सुषिरं सूक्ष्मं तस्मिन्त्सर्वं प्रतिष्ठितमिति सुषिरस्य सर्वाधारत्वोक्त्यसङ्गतिरिति वाच्यम् । मञ्जूषास्थमणिमालायां मन्दिरे मणिमालेतिवदुपपत्तेः । न च पूर्वमते छन्दोगश्रुतौ दहरोऽस्मिन्नन्तराकाश इति पूर्वोक्तभूताकाशस्य दहरस्य यावान्वा अयमाकाशस्तावानेषोऽन्तर्हृदय आकाश इत्युत्तरवाक्येन महापरिमाणोक्त्यसङ्गतिरिति वाच्यम् । दहरोऽस्मिन्नन्तराकाश इत्यत्र भूताकाशस्य ग्रहणेऽपि तावानेषोऽन्तर्हृदय आकाश इत्यत्राकाशस्तल्लिङ्गादिति ब्रह्मसूत्रोक्तन्यायेन ब्रह्मण एव ग्रहणात् ।। १६ ।।

**यो वेदादौ स्वरः प्रोक्तो वेदान्ते च प्रतिष्ठितः ।।**
**तस्य प्रकृतिलीनस्य यः परः स महेश्वरः ।। १७**

**।। अ०१२ ।।**

**धी.ती.–** ।। केन मन्त्रेणोपासितव्य इत्यत आह ।। **य इति** । यो वेदादौ वेदाध्ययनादौ स्वर ओङ्कारः प्रोक्त आदावुच्चार्यत्वेनोक्तः । वेदान्ते च वेदाध्ययनोपरतिकाले च । उच्चार्यत्वेन प्रतिष्ठितः ।

तस्योङ्कारस्य प्रकृतावकारोकारमकारेषु लीनस्य प्रविष्टस्योङ्कारस्य यः परो वाच्यः । इदं परतः पर इत्यादौ वाच्ये परशब्दप्रयोगात् । स महेश्वरो महश्चासावीश्वरश्च महेश्वरः । ईशानां ब्रह्मादीनां वर उत्तमो नारायण उपासितव्य इत्यर्थः ।।

**सा.आ.–** ध्यानमपि प्रणवार्थत्वेन तस्य महापुरुषार्थहेतुरित्यभिसन्धायाह ।। **य इति** ।। वेदादौ वेदारम्भकाले प्रोक्तोऽध्यापकैरुच्चारितः स्वरः प्रणवः । तथा वेदान्ते च वेदसमाप्तिकाले च प्रतिष्ठित उच्चारितः । प्रकृतिलीनस्य प्रकृतिषु अकारोकारमकारेषु लीनस्य स्थितस्य । यद्वा ध्यानकाले प्रकृतौ जगत्कारणे लीनस्य सूक्ष्मरूपेण स्थितस्य तस्य प्रणवस्य । यः परस्तात्पर्यविषयः स महेश्वर इत्यर्थः। 'यत्परः शब्दः स शब्दार्थ' इत्यत्र परशब्दस्योक्तार्थकत्वदर्शनात् । यद्वा उच्चारणोत्तरं स्वप्रकृतौ लीनस्य प्रणवस्य यश्चतुर्थो भागोऽवशिष्यते नादसंज्ञः स पर इत्युच्यते स महेश्वर इत्यर्थः । वाच्यवाचकयोरभेदव्यपदेशोऽयम् । तथा च माण्डूक्योपनिषदि – अमात्रश्चतुर्थोऽव्यवहार्यः प्रपञ्चोपशमः शिवोऽद्वैत इत्यादि । पूर्वयोजनाद्वयं तु प्रश्नोपनिषत्संवादि । 'यः पुनरेतं त्रिमात्रेणोमित्यनेनैवाक्षरेण परं पुरुषमभिध्यायीत स पाप्मना विनिर्मुक्तः स सामभिरुन्नीयते ब्रह्मलोकं स एतस्माज्जीवघनात्परात्पुरिशयं पुरुषमीक्षत' इति प्रश्नोपनिषदि ।। १७ ।। अ० १२ ।।

**सहस्रशीर्ष(९) देवं विश्वाक्षं विश्वशम्भुवम् ।।**
**विश्वं नारायणं देवमक्षरं परमं पदम् ।। १ ।।**

**धी.ती.–** ।। पूर्वानुवाकान्ते हृत्पुण्डरीकस्थस्योपास्यत्वमुक्तं

तद्रूपगुणानाह ।। **सहस्रशीर्षमिति** । सहस्राण्यपरिमितानि शीर्षाणि यस्य स तथोक्तः । अनन्तशीर्ष इति भाष्योदाहृतश्रुतेः । देवं कृपादिगुणविशिष्टम् । तेन विशेषणेन लीलया परिगृहीत-चिदानन्दात्मकोऽनन्तशीर्षादिमहादेहवानित्युक्तं भवति । विश्वाक्ष-मनन्ताक्षं विश्वशम्भुवं पूर्णसुखरूपम् । भूमा सम्प्रसादादिति सूत्रे पूर्णसुखरूपत्वादित्युक्तस्य विश्वशम्भुवमित्येतस्योदाहरणत्वात् । विश्वस्य सर्वस्य जगतः शं सुखमस्माद्भवतीति विश्वशम्भुवम् । पुनः कथम्भूतम् । विश्वं पूर्णं नारायणं गुणपूर्णत्वदोषवर्जितत्वसद्भिर्ज्ञेयत्वा-द्यनेकप्रवृत्तिनिमित्तेन नारायणशब्दवाच्यम् । देवमुपनिषत्प्रतिपाद्यम् । 'देवशब्दो देवताशब्दपर्यायः प्रतिपाद्यमाह' इति गीताभाष्यटीकोक्तेः । स्तुत्यर्थत्वात् दीव्यतेः कर्मणि घञ्प्रत्यये तादृशार्थलाभात् । एतदुपनिषत्प्रतिपाद्यं नारायणमित्यर्थः । परममक्षरं सर्वथा नाश-रहितम् । परतः परमाक्षरं हरिमेवाखिलगुणमिति वचनात् । परममिति देहलीदीपान्यायेन पदमित्यत्राप्यन्वेति । परमं पदमुत्तमप्राप्यम् । ध्यायेदिति शेषः ।।

**सा.आ.–** यो देवानामित्यारभ्य स महेश्वर इत्यन्तस्य पूर्वानु-वाकस्य सहस्रशीर्षं देवमित्युत्तरानुवाको विवरणम् । तत्रापि वेदान्तविज्ञानं कीदृशं विश्वाधिको रुद्र इत्युक्तो रुद्रश्च क इत्याकाङ्क्षायां तद्विवरणं सहस्रशीर्षमित्यारभ्यानन्तमव्ययमित्यन्तम् । दह्रं विपाप-मित्यादेरग्रिमं पद्मकोशेत्यादिस्वराडित्यन्तं विवरणम् । विश्वदर्शनक्षमाणि विश्वानि वाऽक्षीणि यस्येति विग्रहः । बहुव्रीहौ सक्थ्यक्ष्णोरिति षच् । विश्वस्य शं सुखं सम्भवत्यस्मादिति विश्वशम्भुस्तम् । विशति जगत्सर्वस्मिन्निति विश्वम् । दिवु धातोरनेकार्थत्वाद्देवमित्यनयोरर्थ-भेदेनापौनरुक्त्यम् ।। १ ।।

**विश्वतः परमां नित्यं विश्वं नारायण्ँ हरिम् ।।**
**विश्वमेवेदं पुरुषस्तद्विश्वमुपजीवति ।। २ ।।**

धी.ती.– ।। पुनः कथम्भूतमित्यत आह ।। विश्वत इति । विश्वतः परमां अकारवाच्यमित्यर्थः । नदीप्रवाहवत्पूर्णत्वं न कादाचित्कमित्यर्थः । नित्यं विश्वमिति नित्यपूर्णं नारायणमित्यर्थः । हरिं ब्रह्मादिसर्वनिग्रहपूर्वकं हर्तारम् । 'ब्रह्माणमिन्द्रं रुद्रं च यमं वरुणमेव च । निगृह्य हरते यस्मात्तस्माद्धरिरिहोच्यत' इति गीताभाष्य वचनात् । इदं परिदृश्यमानं विश्वं जगत् । जडं, पुरुषश्चेतनश्च तद्विश्वं नारायणाख्यं पूर्णमुपजीवति तदधीनतया वर्तत एवेत्यर्थः ।।

सा.आ.– परमाम् । परं दीर्घश्छान्दसः । द्रविडानां ह्रस्वान्तः पाठः । विशन्ति सर्वे गुणा यस्मिन्सर्वगुणपूर्णमित्यर्थः । आपो नारास्ता एवायनं यस्येत्येकस्यार्थः । अरा दोषास्तेषामयनं न भवतीत्यपरस्यार्थ इति न पौनरुक्त्यम् । हरति पापमिति हरिः । इदं विश्वं पुरुष एवेत्यन्वयः । यतस्तन्नारायणसंज्ञं ब्रह्म कर्म विश्वं कर्तृ उपजीवति अतः पुरुष एवेदमिति पूर्वेणान्वयः । यद्वोक्तस्य वक्ष्यमाणस्य च नारायणे विश्वाभेदस्य सर्वं व्याप्य नारायणः स्थित इत्युपपादनं विज्ञेयम् । उक्तवक्ष्यमाण-द्वितीयान्तानामुपजीवतीत्यत्र कर्मसमर्पकत्वं । तद्विश्वमिति कर्तृ ।। २ ।।

**पतिं विश्वस्यात्मेश्वर्ँ शाश्वत्ँ शिवमच्युतम् ।**
**नारायणं महाज्ञेयं विश्वात्मानं परायणम् ।। ३ ।।**

धी.ती.– ।। विश्वस्य जडात्मकस्य प्रपञ्चस्य पतिं रक्षकम् । पा रक्षण इति धातोरौणादिको डतिप्रत्ययः । आत्मेश्वरं जीवानां

स्वामिनम् । शाश्वतं शश्वदेकप्रकारं, शिवं सुखात्मकम् । शिवं सुखात्मकत्वेनेति वचनात् । अच्युतं सर्वदेवेश्वरभावाच्च्युतिरहितं शिवमच्युतमनश्वरसुखस्वरूपं वा ।। पुनर्नारायणमहिमान्तराण्याह ।। **महाज्ञेयमिति** । ज्ञेयेषु महान्महाज्ञेयः । मुख्यज्ञेयं नारायणमित्यर्थः । तमेवैकं जानथ आत्मानमिति । नारायणोऽसौ परमो विचिन्त्य इत्यादिश्रुत्यन्तरात् । विश्वात्मानं सर्वान्तर्यामिणम् । एष त आत्माऽन्तर्याम्यमृत इति । अन्तर्याम्यधिदैवादिषु तद्धर्मव्यपदेशादिति श्रुतिसूत्राभ्याम् । अन्तर्यामिब्राह्मणे च हरेः सर्वान्तर्यामित्वोक्तेः । परायणं पराणां सर्वजीवोत्तमानां ब्रह्मादीनामयनमाश्रयमित्यर्थः ।।

**सा.आ.**– पतिं स्वामिनम् । आत्मेश्वरम् आत्मनां जीवानां नियन्तारम् । शाश्वतम् एकरूपं, शिवं मङ्गलम्, अच्युतं ज्ञानानन्दादिच्युतिरहितं, नारा गुणास्तेषामयनं नारायणम् । महाज्ञेयं वेदान्तैर्योगिभिश्च मुख्यतो ज्ञेयं विश्वात्मानं विश्वस्यान्तर्यामिणं, परायणं विश्वस्य मुख्याश्रयम् ।। ३ ।।

**नारायणः परो ज्योतिरात्मा नारायणः परः ।**
**नारायणं परं ब्रह्म तत्त्वं नारायणः परः ।।**
**नारायणपरो ध्याता ध्यानं नारायणः परः ।। ४ ।।**
**यच्च किञ्चिज्जगत्सर्वं दृश्यते श्रूयतेऽपि वा ।।**
**अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः ।। ५ ।।**
**अनन्तमव्ययं कविं समुद्रेऽन्तं विश्वशम्भुवम् ।।**

**धी.ती.**– ।। नारायणः परो ज्योतिः परंज्योतिरूपो मुख्यज्योतिरिति यावत् । ज्योतिश्चरणाभिधानादिति सूत्रे तस्यैव

मुख्यज्योतिष्टोक्तेः । आदानादिकर्ता नारायणः परो मुख्यादानादिकर्ता नारायण एव । आदानादिकर्तृत्वादात्मा तेषामगोचर इति माण्डूकभाष्योदाहृतवचनात् । नारायणः परं ब्रह्म नारायणः परं सर्वोत्तमं ब्रह्म । यद्वा ब्रह्म वेदो नारायणपरं नारायणशक्तितात्पर्यक इत्यर्थः । तत्त्वं नारायणः परः परतत्त्वं नारायण एव सर्वत्र नारायणतात्पर्यकः । सोर्लुक् छान्दसः सुपां सुलुगित्यादिसूत्रात् । ध्याता ध्यानकर्ता नारायणपरो नारायणतात्पर्यकः । नारायणमेव ध्यायतीति यावत् । यद्वा ध्याता ध्यानकर्ताऽपि नारायण एव । ध्यानं ध्यानमपि । ध्यै चिन्तायामिति धातोः । परो नारायण एव । न च विरुद्धध्यातृध्यानरूपत्वं कथं नारायणस्येति वाच्यम् । 'ध्यायति ध्यानरूपोऽसौ सुखी सुखयतीव च । विरुद्धधर्मरूपोऽसावैश्वर्यात्पुरुषोत्तम' इति वचनात् । अचिन्त्याद्भुतैश्वर्ययोगेन लोकविरुद्धानामपि परमात्मन्यविरुद्धतयोपपत्तेः । इयमर्धर्क् अधिकपाठेति परैर्न व्याख्याता । यच्च किञ्चिज्जगत्सर्वमिति चारभ्य पञ्चमी ऋगिति चोक्ता । यत्किञ्चिज्जगच्छ्रूयते दृश्यतेऽपि च दर्शनविषयभूतमतीतानागतं च तत्सर्वं जगत् अन्तर्बहिश्च व्याप्य सार्वत्रिकसम्बन्धेन नारायणः स्थितः । अन्तःस्थितत्वे परिच्छेदाज्ञानादिकं स्यादित्यत आह ।। **अनन्तमिति** । अनन्तं देशतः कालतो गुणतोऽपरिच्छिन्नम् । अव्ययं व्ययीकर्तुमशक्यं सर्वथा नाशरहितमिति यावत् । कविं सर्वज्ञम् । अनेनान्तःस्थितत्वेऽपि परिच्छेदादिराहित्यमुक्तं भवति । समुद्रेऽन्तःक्षीरसमुद्रान्तःस्थं विश्वशम्भुवं पूर्णज्ञानाश्रयं विश्वस्य प्रपञ्चस्य शं सुखं भवति यस्मात्तं सर्वजनसुखकारणमिति वाऽर्थः । एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्तीति श्रुत्यन्तरात् ।।

**सा.आ.–** परो ज्योतिः 'परं ज्योतिरुपसम्पद्य' इति छान्दोग्ये समाम्नातम् । परशब्दस्य पुंस्त्वं छान्दसम् । नारायण एवेत्यन्वयः । विसर्गलोपश्छान्दसः । यद्वा ज्योतिरुक्तश्रुतौ ज्योतिःशब्दो नारायणपर इत्यर्थः । आत्मा । आत्मा वा इदमेक एवाग्र आसीत् । आत्मा वाऽरे द्रष्टव्य इत्यादिश्रुतिष्वभिहित आत्मा नारायण इत्यर्थः । यद्वा पर आत्मा परमात्मा नारायण एवेत्यन्वयः । परं ब्रह्म नारायण एवेत्यर्थः । विसर्गलोपश्छान्दसः । यद्वा ब्रह्म तद्विजिज्ञासस्व तद्ब्रह्मेति श्रुत्युक्तो ब्रह्मशब्दो नारायणपरं नारायणपर इत्यर्थः । तत्त्वं सर्वशास्त्ररहस्यं परो नारायण एवेत्यर्थः । अत्र पर इति विशेषणं स्तुत्यर्थः व्यावर्त्याभावात् । ननु विश्वमेवेदं नारायणपरो ध्यातेत्यादि चानुपपन्नम् । नारायणस्य निष्कृष्टतादात्म्यायोगादित्याशङ्क्योक्ततादात्म्यं तव्द्याप्त्यभिप्रायमित्याह ।। **यच्चेति** । एतेनैतत्समानार्था ब्रह्मार्पण-मित्यादिगीता व्याख्याता । अथवा ध्यातृध्यानयोर्नारायणव्याप्तत्वरूपं नारायणात्मत्वमुपलक्षणं सर्वस्य तद्व्याप्तत्वादित्याह ।। **यच्चेति** ।। तेनेदं पूर्णं पुरुषेण सर्वमित्येतदनेन व्याख्यातं भवति । अनन्त-मव्ययमित्यस्य तद्विश्वमुपजीवतीति पूर्वेणान्वयः । पाठक्रमादर्थक्रमस्य बलवत्त्वात् । अनन्तं देशतः कालतो गुणतश्चापरिच्छिन्नं, कविं सर्वज्ञं समुद्रेऽन्तम् अन्तर्भवम् । छान्दसत्वात्साधु । अन्तशब्दो वाऽन्त-रित्यर्थे । विश्वं सम्पूर्णं शं सुखं भवति तिष्ठति यस्मिन् । तेन पूर्वस्माद्भेदः ।। ४,५ ।।

**पद्मकोशप्रतीकाशꣳ हृदयं चाप्यधोमुखम् ।। ६ ।।**

**अधो निष्ठ्या वितस्त्यान्ते नाभ्यामुपरि तिष्ठति ।।**

**ज्वालमालाकुलं भातीविश्वस्यायतनं महत् ।। ६ ।।**

**धी.ती.**– ।। अन्तरुपादनार्थमुपासनास्थानं तत्र हरिस्थितिप्रकारं चाह ।। **पद्मकोशेति** । हृत्पद्मं कीदृशं, पद्मकोशप्रतीकाशं कमल-कुड्मलसन्निभम् । हृदयं हृद्ययनाद्धृदयं हृद्गतमित्यर्थः । हृत्पद्म-मधोमुखमाकुञ्चिताग्रम् । केचित्तु कदलीपुष्पवद्वर्तुलं लम्बमानमित्याहुः। तन्न । तथात्वे भगवतोऽधः शिरस्कतया लम्बमानत्वं स्यात् । तत्पद्यं कुत्र तिष्ठतीत्यत आह ।। **अधो निष्ठ्या इति** । निष्ठ्या ग्रीवासन्धेरधोऽधोभागे वर्तते । तत्रापि नाभ्यामुपरि नाभिदेशस्योर्ध्वभागे वितस्त्यान्ते । द्वादशाङ्गुलिपरिमितो भागो वितस्तिः । वितस्ति-र्द्वादशाङ्गुल इति कोशात् । तस्यान्ते ग्रीवासन्धिनाभ्योर्मध्ये द्वादशाङ्गुलान्ते हृत्कमले वर्तत इत्यर्थः । कथम्भूतम् । ज्वालमाला-कुलं वह्निज्वालामालाभिराकुलं व्यासक्तं बद्धमिति यावत् । व्यग्रो व्यासक्त आकुल इति कोशात् । विश्वस्य पूर्णस्य हरेर्द्यावाभूम्यादेः समस्तप्रपञ्चस्य वा महदायतनं महदाश्रयम् । किं तत्र विद्यते । उभे अस्मिन्द्यावापृथिवी अन्तरेव समाहिते । उभावग्निश्च वायुश्च सूर्याचन्द्रमसावुभौ । विद्युन्नक्षत्राणीति श्रुत्यन्तरात् ।।

**सा.आ.**– दह्रं विपापमित्यादि विवृणोति ।। **पद्मकोशेति** । पद्मकोशः पद्मकुड्मलं तत्प्रतीकाशं तत्सदृशं हृदयं हृद्ययनात् । निष्ठ्या ग्रीवाबन्धस्तस्याधः । वितस्त्यान्ते वितस्तिपरिमितदेश-स्यान्तेऽवसाने । दीर्घश्छान्दसः । इदं नाभ्यामुपरीत्यनेनान्वेति । पूर्वेणापीत्यन्ये । ज्वालमालाकुलं ज्वालामालाभिराकुलं व्याप्तं भाती भाति । दीर्घश्छान्दसः । तद्विश्वस्य जगतो महदायतनमाश्रयः । इदं विशेषणद्वयं तदन्तस्थपरमेश्वरगतं तत्रोपचर्यते ।। ६,७ ।।

सन्ततꣳ शिलाभिस्तु लम्बत्याकोशसन्निभम् ॥
तस्यान्ते सुषिरꣳ सूक्ष्मं तस्मिन्त्सर्वं प्रतिष्ठितम् ॥८॥

तस्य मध्ये महानग्निर्विश्वार्चिर्विश्वतोमुखः ॥
सोऽग्रभुग्विभजन्तिष्ठन्नाहारमजरः कविः ॥

**धी.ती.–** ॥ शिलाभिः शिराभिः । रलयोरभेदात् । नाडीभिः सन्ततं सर्वस्यान्तर्व्याप्तुमाकोशसन्निभं आकोशं पद्ममुकुलं तत्सदृशं हृदयकमलं लम्बति शरीरमध्येऽधोमुखतयाऽवस्थितं वर्तते । तस्य हृदयपद्मस्यान्ते मध्ये सूक्ष्मं सुषिरं रन्ध्रं वर्तते । तस्मिन्सुषिरे सर्वमिदं जगत्प्रतिष्ठितमाश्रितम् । तस्य मध्ये तस्य सुषिरस्य मध्ये महानग्निः । विश्वार्चिः बहुज्वालोपेतः । अत एव विश्वतोमुखः सर्वत्र प्रसृतज्वालः सोऽग्निः । अग्रभुक् प्रथमभोक्ता । तद्यद्भक्तं प्रथममागच्छेत्तद्धोमीयमिति श्रुतेः । कविः मानी चाग्निः आहारं पुरुषभुक्तमाहारमन्नादिकम् । विभजन् सर्वावयवेषु प्रसरयन् । अजरो जरारहितः स्वयमन्यैर्जरयितुमशक्योऽवतिष्ठन् अवस्थित इत्यर्थः ॥

**सा.आ.–** शिलाभिः शिराभिर्नाडीभिः । रलयोरभेदात् । शिराभिरिति मूर्धन्यघटितो द्रविडपाठः । शतं चैका च हृदयस्य नाड्य इति श्रुत्यन्तरात् । आकोशसन्निभं पद्ममुकुलसदृशं लम्बति हृदये लम्बते । तस्य हृदयपुण्डरीकस्यान्तेऽन्तः । सूक्ष्मं सुषिरं तिष्ठति । तस्मिन्सुषिरे सर्वं प्रतिष्ठितम् । तत्स्थपरमेश्वरे प्रतिष्ठितस्य तत्र प्रतिष्ठितत्वोक्तिर्मन्दिरे मणिमालेतिवदित्युक्तम् । ननु तत्स्थ-परमेश्वरस्यापि तद्वदल्पपरिमाणत्वात्कथं विश्वाधारत्वमिति चेन्न । यावान्वा अयमाकाशस्तावानेषोऽन्तर्हृदय आकाश इति छान्दोग्ये

तत्स्थपरमेश्वरस्य महापरिमाणोक्तेः । महापरिमाणस्य तस्याल्पपरिमाणे तत्र कथं स्थितिरिति चेन्न । ईश्वराचिन्त्यशक्त्येति गृहाण । तस्य सुषिरस्य कमलकुड्मलस्य वा । सुषुम्रानालस्येति माधवस्तन्न शोभते । तस्याप्रकृतत्वात् । विश्वार्चिर्बहुज्वालोपेतः । अग्रभुक् अग्र्यभुक् । भुक्तान्नस्य सारभुगित्यर्थः । यद्यप्युपनिषदन्तरे समानस्य वायोर्विभागहेतुत्वमुक्तम् । तथाऽप्येतस्यापि तत् एतच्छास्त्र-प्रामाण्यात् । तिष्ठन्नित्यस्य तस्य मध्य इति पूर्वेणान्वयः । न विद्यते जरा यस्येत्यजरः कविः सर्वज्ञः ॥ ८ ॥

**तिर्यगूर्ध्वमधःशायी रश्मयस्तस्य सन्तताः ॥ ९ ॥**

**सन्तापयति स्वं देहमापादतलमस्तकः ॥**

**धी.ती.**– ॥ तस्याग्नेः तिर्यक् विष्वक् ऊर्ध्वम् ऊर्ध्वभागे अधः अधोभागेऽपि शायी । रश्मयो ज्वालाः सन्तता व्याप्ताः सन्ति । आपादतलमस्तकः पादतलमारभ्य मस्तकपर्यन्तम् । स्वं देहं स्वकीयं देहं सन्तापयति औष्ण्ययुक्तं करोति । स्वदेहसन्ताप एवाग्निसद्भावे लिङ्गम् ॥

**सा.आ.**– तिर्यगूर्ध्वमधश्च शायी मुकुलस्य तिर्यग्भागे ऊर्ध्व-भागेऽधोभागे नाले चेत्यर्थः । तस्याग्ने रश्मयः सन्तताः सर्वशरीरेषु व्याप्ता इत्यर्थः । स्वं स्वसम्बद्धं देहं जीवशरीरम् । आपादतल-मस्तकः पादतलमारभ्य मस्तकपर्यन्तं रश्मिद्वारा गच्छतीति तथा । कवर्गीयादेरन्ते पाठे प्रथमा द्वितीयार्थे । द्वितीयान्तो द्रविडः पाठः । एवंविधः सन् सन्तापयति उष्णं करोति । सोऽयं सन्तापोऽग्निसद्भावे लिङ्गमिति भावः ॥ ९ ॥

**तस्य मध्ये वह्निशिखा अणीयोर्ध्वा व्यवस्थिता ।।१०।।**
**नीलतोयदमध्यस्था विद्युल्लेखेव भास्वरा ।।**
**नीवारशूकवत्तन्वी पीता भास्वत्यणूपमा ।। ११ ।।**
**तस्याः शिखाया मध्ये परमात्मा व्यवस्थितः ।।**

धी.ती.– ।। तस्याग्नेर्मध्ये वह्निशिखा काचिज्ज्वाला । अणोः अणीयसी । अत्यन्तसूक्ष्मेति यावत् । ऊर्ध्वा सुषुम्नानाडीमारभ्य ब्रह्मरन्ध्रपर्यन्तं प्रसृत्य व्यवस्थिता विशेषाकारेणावस्थिता । कथम्भूता वह्निशिखेत्यत आह ।। **नीलेति** । नीलस्य नीलवर्णोपतेस्य तोयदस्य जलदस्य मध्यस्था मध्यस्थिता विद्युल्लेखेव तटिल्लेखेव भास्वरा प्रभावती । नीवारबीजस्य ऋषिधान्यस्य शूकवत्तद्दीर्घपुच्छवत् तन्वी मृद्वी अण्वी वा । पीता भास्वती पीतवर्णयुक्ता दीप्तिमती । अणूपमा अणुवस्तुसदृशी । व्यवस्थितेति पूर्वेणान्वयः । तस्याः शिखाया अणीयस्या अग्निज्वालाया मध्ये । परमात्मा परमश्चासावात्मा च परमात्मा व्यवस्थितः विविधरूपेण प्रादेशमूलेशाग्रेशरूपेणावस्थितः । अथवा आत्मान्तरात्मादिरूपेणावस्थितः । सोऽयं त्रिरूपो भगवान्हृदयाकाशसंस्थित इति तात्पर्योक्तेः । आत्मान्तरात्मेति हरिरेक एव द्विधा स्थितः । निविष्टो हृदये नित्यं रसं पिबति कर्मजमिति भाष्योदाहृतवचनाच्च ।।

सा.आ.– तस्य हृदयकमलस्य मध्ये मध्यभागे । अणीयोऽत्यन्तसूक्ष्मा । ऊर्ध्वा ऊर्ध्वगा वह्निशिखा व्यवस्थिता । वह्निशिखां विशिनष्टि ।। **नीलेत्यादिना** । नीलतोयदस्य नीलमेघस्य मध्यस्था । मध्यस्थादिति पाठे प्रथमार्थे पञ्चमी । विद्युल्लेखेव भास्वरा भास्वरवर्णा । नीवारस्य धान्यविशेषस्यावरणभूतं यच्छूकं दीर्घपुच्छं

तद्वत्तन्वी मूले स्वल्पसूक्ष्माऽग्रेऽतिसूक्ष्मेत्यर्थः । पीता भास्वती दीप्तिमती । अणूपमा लौकिकानामणूनामुपमा उपमानभूता । तस्याः शिखाया मध्ये परमात्मा नारायणो व्यवस्थितः ।। १० ।। ११ ।।

**स ब्रह्म स शिवः स हरिः**
**सेन्द्रः सोऽक्षरः परमः स्वराट् ।। १२ ।। अ०१३ ।।**

धी.ती.– ।। स ब्रह्म । गुणबृंहणादिति वचनात् । अथ कस्मादुच्यते ब्रह्मेति । बृहन्तो ह्यस्मिन्गुणा इति श्रुतेश्च । स एव गुणपूर्णः । स शिवः सुखात्मको मङ्गलप्रदो वा । स हरिः यज्ञभागहरणाद्धरितवर्णत्वाच्च हरिशब्दवाच्यः । 'इडोपहूतं गेहेषु हरेर्भागं क्रतुष्वहम् । वर्णो मे हरितः श्रेष्ठस्तस्माद्धर्यभिधोऽस्म्यहम्' इति गीताभाष्यवचनात् । इन्द्रः परमैश्वर्यशालित्वादिन्द्रशब्दवाच्यः । सेदुराजेत्यादिवत् । इन्द्रः परमैश्वर्यादिति ऋग्भाष्यात् । सोऽक्षरः परमः स एव परमाक्षरः । स्वराट् स्वतन्त्र इत्यर्थः । एतादृशः परमात्मा हृदयकमले वर्तते स उपास्यः ।।

सा.आ.– स ब्रह्म ब्रह्मशब्दवाच्यः । एवमग्रे । द्रविडपाठे स हरिरिति न दृश्यते । नारायणस्य हरिशब्दवाच्यत्वं प्रसिद्धमिति नोक्तमिति बोध्यम् । परमः स्वराडित्यनयोरपि प्रत्येकं स इत्यस्यानुवृत्तिर्बोध्या । स ब्रह्माद्यभिन्न इत्यर्थः इति माधवः । सेन्द्रः इत्यत्र सोऽचिलोप इति सुलोपः । महानग्निरित्युक्तोऽग्निर्देवताविशेषो न तु भूतम् । अजरः कविरिति विशेषणात् । नापि परमात्मा । परमात्मनस्तदीयशिखायां स्थित्युक्तेः ।। १२,१३ ।।

**आदित्यो वा एष एतन्मण्डलं तपति तत्र ता**

**ऋचस्तदृचा मण्डलं स ऋचां लोकोऽथ य एष एतस्मिन् मण्डलेऽर्चिर्दीप्यते तानि सामानि स साम्नां लोकोऽथ य एष एतस्मिन्मण्डलेऽर्चिषि पुरुषस्तानि यजूंषि स यजुषां मण्डलं स यजुषां लोकः सैषा त्रय्येव विद्या तपति य एषोऽन्तरादित्ये हिरण्मयः पुरुषः ।। अ०१४ ।।**

धी.ती.– ।। इयत्पर्यन्तमन्तरोपास्तिमभिधायादित्यप्रतीके भगवदुपास्तिमाह ।। **आदित्य इति** । स एषः पूर्वोक्तो नारायण एतन्मण्डलं परिदृश्यमानं सूर्यमण्डलमधिष्ठाय यस्तपति । एष आदित्योऽदितिपुत्रात्वादादित्यशब्दवाच्यः । आदित्यस्त्वदितेः सुत इति वचनात् । वै प्रसिद्धम् । तस्यैव । असावादित्यो रस इति छन्दोगश्रुतौ । ध्येयः सदा सवितृमण्डलमध्यवर्तीति श्रुतौ च । तत्र मण्डले ताः प्रसिद्धा अग्निमीळ इत्यादिक्रचो ऋग्वेदास्तदभिमानिनो देवाश्च वर्तन्ते । तत्तु ऋचा निष्पादितमिति शेषः । स ऋचां लोकः- स तत्र विद्यमान आदित्यशब्दवाच्यो हरिर्ऋचामृगाभिमानिदेवानां लोक आश्रयः । एवमृगात्मकं मण्डलं तदन्तर्गतं हरिं च ध्यात्वा । एतन्मण्डले योऽर्चिर्दीप्यते भास्वरं तेजः प्रकाशते तान्यर्चिषि सामानि शन्नो देवीरभीष्टय इत्यादिसामवेदा बृहद्रथन्तरादिसामानि तदभिमानिदेवता अभिमन्यमानानि च । सोऽर्चिर्हरिः साम्नां तदभिमानिदेवानां लोक आश्रयभूतः । अथ नामध्यानानन्तरं मण्डलेऽर्चिषि च विद्यमानपुरुषः सूर्यात्मा ध्येयः । य एष मण्डलेऽर्चिषि च पुरुषश्चेतनः सूर्यस्तानि यजूंषि इषे त्वेत्यादिरूपाणि यजुरभिमानिदेवतारूपाणि स परमात्मा यजुरात्मको मण्डलस्थ इति ध्यायेत् । स परमात्मा यजुषां यजुरभिमानिदेवतानां लोक आश्रयः । स एषः

परिदृश्यमानमण्डलमर्चिः पुरुषः । त्रय्येव ऋग्यजुःसामात्मिका विद्यैव । तपति प्रकाशते । य एषः पूर्वोक्त आदित्याख्यो हरिः प्रसिद्धोऽन्तरादित्येऽन्तर्हिरण्मयः सुवर्णात्मको वर्तते । तदुक्तं श्रुत्यन्तरे । अथ य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रुर्हिरण्यकेश आप्रनखात् सर्व एव सुवर्ण इति ।।

**सा.आ.–** हृत्पुण्डरीके नारायणोपासनमुक्त्वाऽऽदित्यमण्डले तदुपासनमाह ।। **आदित्य इति** । अदित्यां भव आदित्यः । दित्यदित्यादित्येति ण्यः । एष नारायण एतन्मण्डलं तपति । तदेतस्य पूर्वेणान्वयः । तत्र मण्डले ता ऋचोऽग्निमीळ इत्याद्या ऋचस्तदभिमानिदेवताश्च । वर्तन्त इति शेषः । तन्मण्डलमृचा । व्याप्तमिति शेषः । निष्पादितमिति शेष इति माधवः । स मण्डलमृचामृगभिमानिदेवतानां ऋङ्मन्त्रजापकानां वा लोको निवासस्थानम् । मण्डलस्थस्य ऋगात्मकत्वेनोपासनामुक्त्वा तदीयार्चिष उपासनामाह ।। **अथेति** । एतस्मिन्मण्डलेऽर्चिर्दीप्यते । अर्चिर्भास्वरं तेजस्तद्रूपेण य एष नारायणः स दीप्यते तानि सामानि सामसंज्ञको वेदस्तदभिमानिदेवताविशेषो वा यस्तेनार्चिर्व्याप्तमित्यर्थः । उद्देश्यस्यार्चिष एकत्वेऽपि विधेयानां साम्नां बहुत्वात्तानीति बहुवचननिर्देशः । सर्वनाम्नामुद्देश्यविधेयान्यतरलिङ्गवचनपरामर्शित्वात् । सोऽर्चिः । उक्तन्यायेनार्चिषि स इति पुल्लिङ्गनिर्देशः । साम्नां वेदानां तदभिमानि देवतानां तद्वेदजापकानां वा लोको निवासस्थानम् । मण्डलेऽर्चिषि चेत्यर्थः । तानि स पुरुषः । लिङ्गवचनयोरुपपत्तिः पूर्ववत् । यद्वा मण्डलोऽर्चिः पुरुषश्चेति । यस्तानीति परामृश्यन्ते । एवमेव तानि सामानीति पूर्वत्र बोध्यम् । यद्वा अर्चिषि यः पुरुषः स तानि प्रसिद्धानि इषेत्वोर्जेत्वेत्यादीनि यजूंषीत्यन्वयः ।

एवमेव तानि सामानीत्यत्रापि । मण्डलार्चिषोर्नारायणाभेदव्यपदेश-स्तदधिष्ठानत्वात् । पुरुषस्य तु मुख्य एव सः । अर्चिर्गतपुरुषस्य नारायणत्वात् । स पुरुषो यजुर्वेदरूपेण शरीरेण मण्डलं मण्डलार्चिः। अभिव्याप्य तिष्ठतीति शेषः । स पुरुषो यजुषां यजुर्वेदानां तदभिमानिदेवतानां तज्ज्ञापकानां वा लोको निवासस्थानम् । प्राप्यो वा । य एषोऽन्तरादित्ये हिरण्मयः पुरुषस्तपति । मण्डलरूपेणेति शेषः । अर्चीरूपेण दीप्यते चेत्यपि बोध्यम् । सैषा त्रयी विद्यैव तपति वेदत्रयतनुरेव सन् तपतीत्यर्थः । दीप्यते चेत्यपि बोध्यम् । आदित्य इति सप्तमीनिर्देशेनोपक्रमस्थं प्रथमान्तमादित्यपदं भवार्थ-ण्यान्तमित्युक्तं भवति । तथा च मण्डलमृग्भिर्व्याप्तमृचां लोकश्च । तत्तनुश्च सः । यजुषा शरीरेण मण्डलस्थमर्चिर्व्याप्य स तिष्ठतीत्येव-मुपासना कार्येत्युक्तं भवति । अत्र यजुषः साक्षात्तत्तनुत्वोक्तेरन्ते कथनाच्च वेदेष्वाधिक्यं गम्यते । तैत्तिरीयोपनिषदन्तरे ऋक्सामयोः पक्षत्वमुक्त्वा यजुषः शिरस्त्वकथनाच्च । वेदानां सामवेदोऽस्मीति गीतावाक्यात्साम्नस्तथात्वम् । प्राथम्यादृग्वेदस्य तथात्वम् । तथाऽपि सेतिकर्तव्यताकस्य कर्मणः समग्रस्य ब्रह्मणश्च समग्रस्य यजुषि निरूपणादर्थकृतमाधिक्यम् । साम्नां तु गीतिश्रवणस्येश्वरतोषहेतु-त्वात्तत्कृतमाधिक्यम् । ऋत्वां तु याज्याद्युत्तरमेवाध्वर्युणा यजना-त्तदभिप्रायेणैवेश्वरेण प्रथमं निःश्वसितत्वाच्च तत्कृतमाधिक्यम् । एवं च विवक्षाभेदेन सर्वसामञ्जस्यम् । एतेनादित्यो वेत्यादित्यशब्दस्य यथा-श्रुतार्थं वदन् यजुषा मण्डलमित्यत्र मण्डलशब्दस्य यथाश्रुतार्थं वदन्माधवः परास्तः ।। अ० १४ ।।

**आदित्यो वै तेज ओजो बलं यशश्चक्षुः श्रोत्रमात्मा**

**मनो मन्युर्मनुर्मृत्युः सत्यो मित्रो वायुराकाशः प्राणो लोकपालः कः किं कं तत्सत्यमन्नमायुरमृतो जीवो विश्वः कतमः स्वयम्भू-र्ब्रह्मैतदमृत एष पुरुष एष भूतानामधि-पतिर्ब्रह्मणः सायुज्यꣳ सलोकतामाप्नोत्येतासामेव देवतानां सायुज्यꣳ सार्ष्टिता समानलोकतामाप्नोति य एवं वेदेत्युप-निषत् ॥ अ० १५ ॥**

धी.ती.– ॥ य एष पूर्वोक्त आदित्यस्थ आदित्यशब्दवाच्यो नारायणः सर्वेषां तेजआदिप्रदत्वेन तच्छब्दवाच्यत्वेनोपास्य इत्याह ॥ **आदित्य इति** । तेजः प्रकाशरूपः । ओजः परावष्टम्भशक्त्यात्मको, बलं बलरूपं सर्वेषां बलप्रदश्च । स वै बलं बलिनां चापरेषामिति भागवतोक्तेः । यशः कीर्तिप्रदस्तदात्मकश्च । भगवद्धर्माणां भगवद-भेदात् सर्वं युज्यते । चक्षुः सर्वं चष्ट इति । चक्षुः स चष्टे भगवान् । सर्वश्रोतृत्वाच्छ्रोत्रम् । श्रोत्रं श्रोतृत्वतो विभुरिति च भाष्ये । आत्मा आदानादिकर्ता । आदानादनकर्तृत्वादात्मा तेषामगोचर इति वचनात् । मन्त्रत्वान्मनः मनःशब्दवाच्यो, मन्तृत्वतो विभु-रित्युक्तेः । मन्युः क्रोधाभिमानी मन्युनामकतापसमन्युगतो नृसिंहादि रूपो मन्युप्रदश्च । मनुः स्वायम्भुवादिमन्वन्तरगतस्तच्छब्दाभिधेयश्च । मृत्युः सर्वमारकः । सत्यः सद्भावप्रापको, मित्रो मित्वा त्रायत इति मित्रो भक्तत्वेन ज्ञात्वा रक्षणकर्तेति यावत् । वायुः वाति जानातीति वायुः । वा गतिगन्धनयोरिति धातोः । कृपावाजीत्यादिना उण् । आ समन्तात्काशत इत्याकाशः । प्राणः प्रकृष्टचेष्टकः । प्रकृष्टचेष्टकः प्राण इत्युक्तेः । लोकपालो लोकान्पालयतीति लोकपालः । कः सुखात्मको ब्रह्मवायुसूर्यान्तर्गतश्च । मारुतो वेधसि ब्रध्ने पुंसि क इति

कोशात् । किं साकल्येन वाचाऽनिर्देश्यरूपः कं सुखात्मकः । ततत्वाव्याप्तत्वातत्त् । सत्यं यथार्थज्ञानरूपमन्नं सर्वोपजीव्यम् । सोऽन्नं सर्वोपजीव्यत्वात् इति वचनात् । अमृतो नित्यमुक्तो, जीवः सर्वप्राणधारको, विश्वः पूर्णः । कतमोऽतिशयितसुखरूपः । स्वयम्भूः स्वयमेवाभिव्यक्तः । उत्पत्तिकारणशून्य इति यावत् । ब्रह्म गतम् । एतदमृतं ब्रह्मैतदमृतमुभयमेतद्ब्रह्मेति श्रुतेः । एष पुरुष एष सूर्यान्तस्थः । पुरु बहुधा सूत इति पुरुषः । एष भूतानामधिपतिः सर्वेषां प्राणिनामीश्वरः । य एवं वेद पूर्वोक्ततेजोरूपत्वादिना वेद सहस्रशीर्षत्वादिना च वेद स सूर्यः । ऋक्सामयजुरादिदेवतानां समानलोकतामाप्य ब्रह्मणः सायुज्यं सार्ष्टितां समानलोकतामाप्नोति । तत्र सालोक्ययोग्यानां सालोक्यप्राप्तिः । अङ्गदेवतानां तत्तदङ्ग-सायुज्यप्राप्तिः । ब्रह्मवायुपत्नीनां सार्ष्टिशब्दितसर्वाङ्गसायुज्यप्राप्तिरिति विवेकः । इत्युपनिषद्रहस्यम् ।

**सा.आ.**– उक्तोपासनानां वक्ष्यमाणानां च फलं सकृदेवानुपदं वक्ष्यति । अस्यैव गुणान्तरोपासनामाह ।। **आदित्य इति** । तेज-आदिरूपत्वेनोक्त आदित्यो ध्यातव्य इति भावः । ओजो बलकारणं धातुविशेषो, बलं शरीरशक्तिः । चष्ट इति चक्षुः । सर्वं करतलामलकवत् पश्यतीत्यर्थः । सर्वं शब्दजातं शृणोतीति श्रोत्रमातत इत्यात्मा । सर्वं मनुत इति मनो मन्युः क्रोधः क्रतुर्वा । मनुः स्वायम्भुवादिमनुः । मनुप्रभृतीनां कतिपयानां परमेश्वरविभूतित्वाद-भेदव्यपदेशो द्रष्टव्यः । मृत्युः मृत्युदेवता । सत्यः सत्याभिमानि-देवता । मित्रः सूर्यः । प्राणः शरीरान्तस्सञ्चरी वायुः । लोकपाल इन्द्रादिः । यद्वा तेजः तेजोरूप ओजः शक्तिरूपो बलं बलात्मकः ।

ओज इच्छामात्रेण विचित्रतरपदार्थसर्जनशक्तिर्बलं च दैत्यादेरभिभवानुकूलमिति भेदः । अत एव पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया चेति श्रुतौ शक्तिबलयोः पृथङ्निर्देशः । यशः कीर्तिरूपः । मन इत्यन्तं व्याख्यातम् । मन्युः सर्वं जगत्स्वाधीनं मन्यते । मनुः अतीतमनागतं च मनुते । मृत्युः मृत्युमृत्युः । मृत्युमृत्युं नमाम्यहमिति श्रुतेः । सत्यः सर्वदेशकालेष्वेकरूपेणास्तीति । मित्रः सर्वस्य प्राणिजातस्य । द्वा सुपर्णा सयुजा सखायेति श्रुतेः । वाति सर्वत्रेति वायुः । आ समन्तात्काशते प्रकाशत इत्याकाशः । तथा च श्रुतिः । को ह्येवान्यात्कः प्राण्याद्यदेष आकाश आनन्दो न स्यादिति । प्राणः प्राणयति सर्वान्प्राणं वा । तथा च श्रुतिः । प्राणस्य प्राणमिति । लोकान्पालयतीति लोकपालः । कायति शब्दं करोतीति कः । कै गै शब्दे । किं विविदिषूणां प्रश्नविषयीभूतं, कं सुखरूपं, तनोतीति तत् । सत्यं स्त्यस्य सत्यम् अन्नम् । अद्यतेऽत्ति च भूतानि तस्मादन्नं तदुच्यत इति श्रुतेः । अमृतो मृतिरहितो जीवः प्राणधारकः । जीव प्राणधारणे । विशति सर्वस्मिन्निति विश्वं । कं सुखमस्यास्तीति कः अतिशयेन कः कतमश्च । स्वयमेव भवतीति स्वयम्भूः । ब्रह्म । बृहेर्वृद्ध्यर्थत्वान्मन् । देशतः कालतो गुणतश्चापरिच्छिन्नम् । एतत् अमृतमस्मिन्नित्येतदमृतः । एष उक्त आदित्यः पुरुषः सर्वासु पूर्षु शेते । एष भूतानामधिपतिः स्पष्टोऽर्थः । अत्र तत्तच्छब्दप्रवृत्तिनिमित्तमुखेन तत्तच्छब्दसमन्वयोऽप्यभिप्रेतः । य एवं वेदेति ब्रह्मणः सायुज्यमित्यत्राप्यनुषक्तव्यम् । तथा चायमर्थः । य उपासक एवं तेज ओज इत्यारभ्य भूतानामधिपतिरित्यन्तप्रकारेणादित्यस्थं नारायणं वेद उपास्ते । स

ब्रह्मणः परब्रह्मणो नारायणस्य सायुज्यं सलोकतां वाऽऽप्नोति । तत्रोपासनाधिक्ये सायुज्यमुपासनाया मध्यमत्वे सालोक्यमिति बोध्यम् । एवमग्रे । यः पुरुष आदित्यो वा एष एतन्मण्डलमित्यारभ्य हिरण्मयः पुरुष इत्यन्तोक्तदिशोपास्ते स एतासां देवतानामेव ऋक्सामयजुरभिमानिदेवतानामादित्यस्य च सायुज्यादि प्राप्नोति । सार्ष्टितां समानैश्वर्यम् । एवकारेण ब्रह्मसायुज्यव्यवच्छेदः । तदुपासनायाः स्वल्पैश्वर्यविषयत्वादेवमुक्तम् । उत्तरोपासनाया ब्रह्मैश्वर्यविषयत्वाद्ब्रह्मसायुज्यं तत्फलम् । दहरोपासनायास्तु परिमुच्यन्ति सर्व इति फलमुक्तमेव । ननु आदित्यस्थहिरण्मयपुरुषोपासकस्य कथमन्यदेवतासायुज्यादिफलम् । न ह्यन्योपासकोऽन्यं प्राप्नुत इति चेन्न । ऋगादित्रयीतनुत्वाद्यल्पैश्वर्येणोपासनायामल्पैश्वर्यप्राप्तेरेव युक्तत्वात् । तं यथा यथोपासते तदेव भवतीति श्रुतेः । विशेषणतया ऋगादिदेवतानामप्युपासनात् । यत्तु माधवेनोक्तं ब्रह्मणः सायुज्यं नाम हिरण्यगर्भसायुज्यं देवतानां सायुज्यं नामेन्द्रादिदेवतानां सायुज्यमिति । तन्न । आदित्यस्थपुरुषस्य नारायणत्वेन हिरण्यगर्भोपासनाया अप्रकृतत्वात् । न ह्यन्योपासकोऽन्यं प्राप्नोतीति युक्तम् । न चादित्यस्थः पुरुषो हिरण्यगर्भः । आदित्यो वा एष इत्येतच्छब्देन पूर्वप्रकान्तनारायणस्यैव परामर्शौचित्यात् । स्वयमपि तथैवोक्तत्वाच्च । ध्येयः सदा सवितृमण्डलमध्यवर्ती नारायण इत्यागमेन नारायणस्यैवादित्यस्थत्वाच्च । देवतानामित्याद्यपि न । ऋगादिदेवतानामेव प्रक्रान्तत्वेनेन्द्रादेरप्रक्रान्तत्वात् । इत्युपनिषत् इदं रहस्यमित्यर्थः ।। अ० १५ ।।

**निधनपतये नमः । निधनपतान्तिकाय नमः ।**

**ऊर्ध्वाय नमः । ऊर्ध्वलिङ्गाय नमः । हिरण्याय नमः । हिरण्यलिङ्गाय नमः । सुवर्णाय नमः । सुवर्णलिङ्गाय नमः। दिव्याय नमः । दिव्यलिङ्गाय नमः । भवाय नमः। भवलिङ्गाय नमः । शर्वाय नमः । शर्वलिङ्गाय नमः । शिवाय नमः शिवलिङ्गाय नमः । ज्वलाय नमः। ज्वललिङ्गाय नमः । आत्माय नमः आत्मलिङ्गाय नमः । परमाय नमः । परमलिङ्गाय नमः । एतत्सोमस्य सूर्यस्य सर्वलिङ्गꣳस्थापयति पाणिमन्त्रं पवित्रम् ।। अ०१६ ।।**

धी.ती.– ।। इतः परं पाणिमन्त्रशब्दितमन्त्रविशेषप्रतिपाद्यत्वं हरेराह ।। निधनेति । निधनपतये कुलपतये कुलनाशकाय वा । निधनं कुलनाशयोरिति कोशात् । निधनपतान्तिकाय निधनपता निधनपतयस्तेषामन्तिकाय समीपवर्तिने हरये नमः । ऊर्ध्वाय सर्वोत्तमाय । ऊर्ध्वमूल इत्यादावूर्ध्वशब्दस्य सर्वोत्तमत्वोक्तेः । ऊर्ध्वलिङ्गाय सर्वोत्तमत्वचिन्हाय नमः । हिरण्याय विलक्षणसुखाय । हिरण्यलिङ्गाय प्रवर्तकत्वोचितलिङ्गवते । सुखं लब्ध्वा हि कुरुत इति सुखोद्रेकादेव भगवतः सृष्ट्यादिप्रवृत्त्युक्तेः । सुवर्णाय शोभनशुक्लादि-द्विजादिवर्णाय । स्तुत्याय वा । वर्णो द्विजादौ शुक्लादौ स्तुतौ वर्णं तु वाऽक्षर इति कोशात् । तस्य ह वा एतस्य नारायणस्य चत्वारि रूपाणि । शुक्लं रक्तं रौक्मं कृष्णमिति श्रुतेः । सुवर्णलिङ्गाय ब्राह्मणवर्णोचितयजनयाजनादिलक्षणवते । स्तुत्यसर्वोत्तमत्वसर्वाभीष्ट-दातृत्वादिलिङ्गाय वा । दिव्यायालौकिकायेत्यर्थः । दिव्यो ह्यमूर्तः पुरुष इति श्रुत्यन्तरात् । दिव्यलिङ्गायालौकिकयुगपदणुत्वमहत्त्वादि-लोकविलक्षणधर्मवते । भवाय भवशब्दितरुद्रान्तर्गताय रामकृष्णादि-

रूपेणाभिव्यक्तिलक्षणोत्पत्तिमते वा । अजायमानो बहुधा विजायत इति श्रुतेः । प्रत्यक्षत्वं हरेर्जन्मेति स्मृतेश्च । भवलिङ्गाय तच्चिन्हाय । शर्वायाभक्तसुखरोधकाय । शर्वः शंरोधनाद्धरिरिति भाष्योदाहृत-वचनात् । शर्वलिङ्गाय त्रिनेत्रत्वादितच्चिन्हाय । शिवाय मङ्गलरूपाय सुखात्मकाय वा । शिवलिङ्गाय सुखात्मकत्वचिन्हाय मुखे हासादि-मते । ज्वालाय ज्वलिताय ज्वललिङ्गाय प्रकाशनलिङ्गाय । आत्मायान्तर्यामिणे । आत्मलिङ्गाय अन्तर्मननाद्यात्मलिङ्गवते । परमायोत्तमाय । परमलिङ्गाय उभयोत्तमचिन्हवते । एतत्पाणिमन्त्रं पूर्वोक्तं सूर्यस्य सोमस्य पवित्रं सर्वलिङ्गं भगवति स्थापयति प्रतिपादयतीत्यर्थः । इदं पाणिमन्त्रं भगवति परमात्मनि सोमादि-सर्वदेवताचिन्हानि स्थापयतीति यावत् ॥

**सा.आ.–** इदानीं रूद्रप्रशंसामुप्रक्रमते ॥ **निधनेति** । नाश-स्तत्पतय इत्यर्थः । मृत्युञ्जयस्य निधनदेवतात्वात् । निधनं पतत्यन्तिके यस्येति निधनपतान्तिकः । पृषोदरादित्वात्साधुः । ऊर्ध्वाय उत्कृष्टाय । ऊर्ध्वलिङ्गाय उत्कृष्टलिङ्गाय । लिङ्गपदेन पाणिपदादिरहिता मूर्तिरभिधीयते । सुष्टु वर्णो यस्य तस्मै । दिवि भवं दिव्यं, भवति सर्वमस्मादिति भवः । शृणोति हिनस्ति सर्वमिति शिवः । शिवाय मङ्गलाय । ज्वलत दीप्यत इति ज्वलः । आत्माय व्यापकाय । छान्दसमदन्तत्वम् । एतल्लिङ्गदशकं सोमस्य चन्द्रस्य सूर्यस्य च पूज्यमुपास्यं वा । मनुष्याणां पूज्यलिङ्गमाह ॥ **सर्वेति** । एतन्नामकमेकादशं लिङ्गं ब्राह्मणादीनां पूज्यं स्थाप्यं च । पाणिमन्त्रं पाणिना वेदमन्त्रैरभिमन्त्रितं पवित्रं पापशोधकं सर्वलिङ्गमेतन्नामकं लिङ्गं स्थापयति । पुण्यक्षेत्रेषु ब्राह्मणादिरिति शेषः ॥ अ० १६ ॥

**सद्योजातं प्रपद्यामि सद्योजाताय वै नमो नमः ॥**
**भवे भवे नातिभवे भवस्व मां भवोद्भवाय नमः**
**॥ अ०१८॥**

**धी.ती.–** ॥ ब्रह्मोपासनार्थं पञ्च ब्रह्ममन्त्रानाह ॥ **सद्य इति** । सद्यो ध्यानसमये जातमभिव्यक्तं परमात्मानं सद्योजातशब्दितरुद्रान्तर्गतं प्रपद्यामि प्रपद्ये । शरणमिति शेषः । परस्मैपदव्यत्ययश्छान्दसः । सद्योजाताय ध्यानकालेऽभिव्यक्ताय प्रल्हादादिभक्तानिष्टनिवर्तने सद्यः स्तम्भादाविर्भूताय नमो नमः । पुनः पुनः वन्दनमादरार्थम् । भवे भवे प्रतिसृष्टौ मामतिभवेऽत्यन्तसंसारे नातिभवस्व नोत्पादय । अन्तर्णीतणिच् । भवोद्भवाय संसारस्योद्भव उत्पत्तिर्यस्मात्तस्मै नमः । वै प्रसिद्धम् । संसारोत्पादकत्वं बन्धको भवपाशेनेत्यादि स्मृतिप्रसिद्धमित्यर्थः ॥

**सा.आ.–** सद्योजातं भक्तानिष्टनिरसनाय सद्य एवाभिव्यक्तं तन्नामकं रूद्रं प्रपद्यामि शरणं प्राप्नोमि । भवे भवे जन्मनि जन्मनि । नातिभवे न गच्छामि । तदर्थं त्वं मां मां प्रति भवस्व प्राप्नुहि । भू प्राप्तावात्मनेपदी । जन्मविच्छेदाय मयि प्रसादं कुर्विति तात्पर्यम् । भवोद्भवाय भवस्योद्भवो यस्मादिति विग्रहः ॥ अ० १८ ॥

**वामदेवाय नमो ज्येष्ठाय नमः श्रेष्ठाय नमो रुद्राय नमः कालाय नमः कलविकरणाय नमो बलविकरणाय नमो बलाय नमो बलप्रमथनाय नमः सर्वभूतदमनाय नमो मनोन्मनाय नमः ॥ अ० १९ ॥**

**धी.ती.–** ।। वामः सुन्दरोऽभक्तप्रतीपो वा । वामो वल्गुप्रतीपौ द्वाविति कोशात् । स चासौ देवः क्रीडादिगुणविशिष्टस्तस्मै नमः । ज्येष्ठाय शिवपक्षेऽग्रजाय । ब्रह्मणः प्रथमे कल्पे शिवः प्रथमजः स्मृत इति वचनात् । भगवत्पक्षे ज्येष्ठाय तस्यैव व्याख्यानं श्रेष्ठायेति सर्वोत्तमायेत्यर्थः । नमो रुद्राय अन्तकाले सर्वरोदयित्रे । रूग्द्रावकाय रुद्रान्तर्गताय तच्छब्दवाच्याय हरये नमः । रुदं वेदरूपं शब्दं कल्पादौ ब्रह्मणो राति ददातीति वा रुद्रः । तस्मै नमः । कालाय बन्धकाय सर्वसंहर्त्रे वा । कल बन्धने कल संहरण इति धातोः । नम इति सर्वत्रान्वयः । कलविकरणाय कलं बद्धं विकरोतीति नाशयतीति विकरणः । बन्धविमोचकायेति यावत् । भवपाशाच्च मोचक इति स्मृतेश्च । नमो बलविकरणाय बलं शरीरं विशेषेण करोतीति यद्वा परबलं शत्रुसैन्यं विकरोतीति विनाशयतीति वा विकरणस्तस्मै नमः । नमो बलाय सर्वेषां बलप्रदात्रे । स वै बलं बलिनां चापरेषामिति भगवतोक्तेः । नमो बलप्रमथनाय सर्वसैन्यस्य प्रकर्षेण मथनकर्त्रे नमः । सर्वभूतदमनाय सर्वप्राणिनिग्रहकर्त्रे नमः । मनोन्मनाय मनसोत्कृष्टतया मनाय मननीयायेत्यर्थः । पुनर्नम इति द्विरुक्ति-रादरार्था । अस्मिन्मन्त्रे भगवतः सुन्दरत्वं ज्येष्ठत्वं बन्धकत्व-मोचकत्वादयो महिमानो वर्णिताः ।।

**सा.आ.–** वामदेवाय शोभनदेवाय । इदमपि योगरूढं रुद्रनाम । ज्येष्ठाय वृद्धाय । श्रेष्ठायातिशयेन प्रशस्याय । रुद्रायेत्यादि स्पष्टम् । कलविकरणाय मधुरस्वरकर्त्रे । बलविकरणाय बलदात्रे, बलाय बलस्वरूपाय बलप्रमथनाय शत्रूणां बलप्रमथनकर्त्रे । सर्वभूतेति स्पष्टार्थम् । मनोन्मनाय मनस उन्मनीभावकर्त्रे ।। अ० १९ ।।

**अघोरेभ्योऽथ घोरेभ्यो घोरघोरतरेभ्यः ॥**
**सर्वेभ्यः सर्वशर्वेभ्यो नमस्ते अस्तु रुद्ररूपेभ्यः ॥**
**अ०२० ॥**

**धी.ती.–** ॥ अघोरेभ्योऽभयङ्करेभ्यः सोमस्कन्दादिरूपेभ्यो रुद्ररूपेभ्यो, घोरेभ्यो वीरभद्रादिरूपेभ्यो भयङ्करेभ्यो, घोरघोरतरेभ्योऽनन्तभयप्रदेभ्यः सर्वेभ्यः समस्तेभ्यः सर्वशर्वेभ्यः सर्वाभक्तसुखसंरोधकेभ्यो रुद्ररूपेभ्यः परमेश्वररूपेभ्यो नृसिंहादिरूपेभ्यः । ते नमोऽस्तु ॥

**सा.आ.–** अघोरेभ्य इत्यादिचतुर्थ्यन्तानां रुद्ररूपेभ्य इति विशेष्येणान्वयः । घोरघोरतरेभ्यो घोरेभ्यो घोरतरेभ्य इति विग्रहः । सर्वेभ्य इत्यघोरेभ्य इत्यादीनां विशेषणम् । सर्वशर्वेभ्य इति कर्मधारयः षष्ठीतत्पुरुषो वा । शर्वशब्दो दुष्टहिंसकपरः । त इत्येकवचनं बहुवचनार्थे ॥ अ० २० ॥

**तत्पुरुषाय विद्महे महादेवाय धीमहि ।**
**तन्नो रुद्रः प्रचोदयात् ॥ अ० २१ ॥**

**ईशानः सर्वविद्यानामीश्वरः सर्वभूतानां ब्रह्माधिप्रतिब्रह्मणोऽधिपतिर्ब्रह्मा शिवो मे अस्तु सदाशिवोम् ॥अ०२२॥**

**धी.ती.–** ॥ तत्पुरुषायेति गतम् । ईशान इत्येकवाक्यरूपेणैको मन्त्रः । ईशानः सर्वविद्यानां सर्वविद्यानामीशानः स्वामी । सर्वभूतानां प्रमथगणानां समस्तप्राणिनां चाधिपतिः । ब्रह्माधिपतिः ब्रह्मा चतुर्मुखोऽधिपतिः स्वामी यस्यासौ तथोक्तः । ब्रह्मणो वेदस्य तपसो

वाऽधिपतिः । ब्रह्मा स्वोचितज्ञानादिगुणपूर्णः शिवः परमेश्वरः शिवो मङ्गलप्रदः सदा मेऽस्तु । भगवत्पक्षे – ब्रह्म च सर्वाधिपतिश्च ब्रह्माधिपतिः पूर्णस्वामी । ब्रह्मा । ब्रह्मदृष्टिरुत्कर्षादिति । 'आत्मेत्येव यदोपासा तदा ब्रह्मत्वसंयुता । कार्यैव सर्वथा विष्णोर्ब्रह्मत्वं न परित्यजेत्' इति भाष्योदाहृतब्रह्मतर्कवचनात् । ब्रह्मणश्चतुर्मुखस्याधिपतिः । ब्रह्मा देशकालगुणापरिच्छिन्नः । शिवः सुखात्मकः सदाशिवः सदा मङ्गलप्रदः । मेऽस्तु हरिरित्यर्थः ॥

**सा.आ.–** तत्पुरुषायेति रुद्रगायत्री पूर्वं पठिताऽपि प्रसङ्गात्पुनः पठिता । अर्थस्तूक्त एव । ईशान ईशिता । ब्रह्माधिपतिरिति । नायं षष्ठीतत्पुरुषः । ब्रह्मणोऽधिपतिरित्युत्तरत्र श्रवणात् । नापि कर्मधारयः । ब्रह्मा शिव इत्युत्तरत्र श्रवणात् । कस्तर्हि बहुव्रीहिः । ब्रह्म परंब्रह्म नारायणोऽधिपतिर्यस्येति विग्रहः । ब्रह्मणो हिरण्यगर्भस्य तपसो वाऽधिपतिः । ब्रह्मा पूर्णः शिवो मे । पूज्य इति शेषः । अस्तु । हे सदाशिव ॐ मया प्रार्थितमङ्गीकुरु । ओमाङोश्चेति पररूपम् ॥ अ० २१ ॥ २२ ॥

**नमो हिरण्यबाहवे हिरण्यवर्णाय हिरण्यरूपाय हिरण्यपतयेऽम्बिकापतय उमापतये पशुपतये नमो नमः ॥अ०२३॥**

**धी.ती.–** ॥ हिरण्यबाहवे हिरण्यालङ्कृतबाहवे द्रविणप्रदाय वा । हिरण्यवर्णाय सुवर्णवर्णाय । हिरण्यरूपाय सुवर्णाकृतये । आप्रणखात्सर्व एव सुवर्ण इति श्रुतेः । रूपमाकारोऽप्याकृतिस्त्रियामिति कोशात् । हिरण्यपतये वित्तस्वामिने । अम्बिकापतये पार्वतीपतये जगन्मातृलक्ष्मीपतये वा । मृडानी चण्डिकाऽम्बिकेत्यमरः । उमापतये

उत्कृष्टज्ञानपतये पशुपतये द्विपाच्चतुष्पात्स्वामिने । य एतावन्तो वै पशवो द्विपाच्चतुष्पादश्चेति पशुपतिः । पशूनां चतुष्पदामुत द्विपदामिति श्रुतेः । तस्मै तदन्तर्गतस्य उमापतये उत्कृष्टलक्ष्मीपतये हरये नमो नमः ॥

**सा.आ.–** न केवलं हिरण्यबाहवे किन्तु सर्वाङ्गहिरण्यवर्णाय । हिरण्यं रूपयतीति हिरण्यरूप; । रूप रूपक्रियायाम् । अत एव हिरण्यपतये । अम्बिका जगन्माता पार्वती तत्पतये । अम्बिकोमा-शब्दयोः प्रवृत्तिनिमित्तभेदादपौनरुक्त्यं नाम्नोः । पशूनां जीवानां पतये पशुपतये ॥ अ० २३ ॥

**ऋतं सत्यं परं ब्रह्म पुरुषं कृष्णपिङ्गलम् ॥**
**ऊर्ध्वरेतं विरूपाक्षं विश्वरूपाय**
**वै नमो नमः ॥ अ०२४ ॥**

**धी.ती.–** ॥ ऋतं यथार्थज्ञानरूपं, सत्यं सद्भावप्रापकं, परं ब्रह्म सर्वोत्तमं गुणपूर्णं, पुरुषं गतम् । कृष्णपिङ्गलम् उभयरूपं मिश्ररूपं वा । ऊर्ध्वरेतम् ऊर्ध्वरेतसं, कपिलव्यासादिरूपेषु विषमनयनत्वात् विरूपाक्षम् । ध्यायेन्नृसिंहमुरुवृत्तरवित्रिनेत्रमित्युक्तेः । विश्वरूपाया-नेकरूपाय । विश्वरूपं किरणं जातवेदसमिति श्रुत्यन्तरात् । शिवरूपी शिवे स्थित इति प्रसिद्धिं द्योतयति वैशब्देन । एतादृशाय हरये नमो नमः । अत्रैतद्वाक्यसदृशतापनीयोपनिषदि पूर्वोत्तरार्धयो-र्भिन्नार्थत्वं वर्णितमनुव्याख्याने । 'ऋतं सत्यं परं ब्रह्म पुरुषं कृष्णपिङ्गलम् । विष्ण्वाख्यमुक्तमन्यत्रोर्ध्वरेतं च तत्प्रति । विरूपाक्षाख्यमपरं ब्रह्मोक्तं तद्व्रते स्थितम्' इत्यनुव्याख्यानार्थस्तु सुधातोऽवगतन्तव्यः ॥

**सा.आ.–** ऋतं पूर्वं यथावगतं तथैव सदा स्थितम् । पूर्वावगतवत्सदा स्थितेर्ब्रह्मर्तमित्युक्तमिति स्मृतेः । सत्यं सर्वदेशकालेषु विद्यमानं, कृष्णपिङ्गलं प्राचुर्येण कृष्णवर्णमिश्रवर्णान्तरयुक्तं ऊर्ध्वरेतमुत्कृष्टरेतस्कम् । छान्दसः सलोपः । विरूपाण्यक्षीणि यस्य सः । ध्यायामीति शेषः । अयं रूद्रस्तमोऽधिष्ठितः परं ब्रह्मैव न त्वहङ्कारिकः । तथा च नृसिंहपूर्वतापनीये । ऋतं सत्यं परं ब्रह्म पुरुषं नृकेसरविग्रहम् । कृष्णपिङ्गलमूर्ध्वरेतं विरूपाक्षं शङ्करं नीललोहितम् । उमापतिं पशुपतिं पिनाकिनं ह्यमितद्युतिमिति । महाभारते कैलासयात्रायां हरिहराभेदोक्तिरप्येतदभिप्राया । आहङ्कारिकस्तु रुद्रो देवताविशेषो न परं ब्रह्म । स्कान्दे वैष्णवखण्डे तस्य पञ्चमकक्ष्यायां निवेशनादिति केचिदाहुः । तत्त्ववादिनस्तूर्ध्वरेतं विरूपाक्षं पुरुषं नीललोहितमित्युत्तरार्धं श्रुत्यन्तरे पठ्यते । तत्र पुरुषं नीललोहितमित्येतत्पुरुषं कृष्णपिङ्गलमित्यनेन पुनरुक्तं भविष्यति । अतस्तपन्तमित्यध्याहृत्य परं ब्रह्मप्रति तपन्तं विरूपाक्षमिति योजना । एवं सति ब्रह्माधिपतित्वमपि पूर्वोक्तं समञ्जसं भवति । अत एव पत्युरसामञ्जस्यादिति ब्रह्मसूत्रे पशुपतेरविशेषेण जगत्कारणत्वनिरासोक्तिः सङ्गच्छते । निमित्तकारणत्वनिराकरणपरतया योजना तु न युक्ता । उत्तरसूत्रानानुगुण्यादित्याहुः ।। अ० २४ ।।

**सर्वो वै रुद्रस्तस्मै रुद्राय नमोऽस्तु ।।**
**पुरुषो वै रुद्रः सन्महो नमो नमः ।।**
**विश्वं भूतं भुवनं चित्रं बहुधा जातं जायमानं च यत् ।।**
**सर्वो ह्येष रुद्रस्तस्मै रुद्राय नमो अस्तु ।। अ० २५ ।।**

**धी.ती.**– ।। सर्वः सर्वशब्दवाच्यः । सर्वान्तर्यामिको विष्णुः सर्वनाम्नाऽभिधीयत इति वचनात् न सर्वाभेदः शङ्कनीयः । तस्मै रुद्राय पूर्वोक्तसर्वान्तर्गताय रुद्रशब्दवाच्याय हरये नमोऽस्तु । पुरुषो वै रुद्रः, सहस्रशीर्षा पुरुष इत्यादिपुरुषसूक्तप्रतिपाद्यो रुग्द्रावणाद्रुद्र-शब्दवाच्यो हरिः । सन्महः समीचीनोत्सवतेजोरूपस्तस्मै नमो नमः । सर्व इति सामान्योक्तं विशदयति ।। **विश्वमिति** । भूतं पूर्वकालीनं जगच्चित्रमनेकविधं बहुधा जातमिदानीं बहुप्रकारेणोत्पन्नं सुरनर-तिर्यगादिलक्षणं भुवनं, जायमानं जनिष्यमाणं चैष एव रुद्रः प्रसिद्धः परमात्मा सर्वः सर्वान्तर्यामी तस्मै रुद्रायेति प्राग्वत् । अनेन भूतभविष्यद्वर्तमानकालीनजगति स्थित्वा प्रेरकत्वं हरेरुक्तम् ।।

**सा.आ.**– विश्वरूपायेत्येतद्विवृणोति ।। **सर्व इति** । सर्वो वै इत्ये-तद्विवृणोति ।। **पुरुष इति** । जीव इत्यर्थः । सत् सद्रूपो महस्तेजोरूपः । विश्वभूतमित्येतद्विवृणोति ।। **भुवनमिति** । चित्रं भुवनं बहुधा जातं यज्जायमानं सर्वो ह्येष इत्यन्वयः । अत्र सर्वात्मकत्वं सर्वं समाप्नोषीति न्यायेन ।। अ० २५ ।।

**कद्रुद्राय प्रचेतसे मीढुष्टमाय तव्यसे ।।**
**वोचेम शन्तमं हृदे । सर्वो**
**ह्येष रुद्रस्तस्मै रुद्राय नमो अस्तु ।। अ० २६ ।।**

**धी.ती.**– ।। कत्थ श्लाघायामिति धातोरुत्पन्न कत्शब्दः प्रशस्ततामाह । कद्रूद्राय प्रशस्ताय रुद्राय रुद्रशब्दवाच्याय हरये । अनेनान्येषामेकादशरुद्राणामप्रशस्तत्वं ध्वनीतम् । प्रचेतसे प्रकृष्टं चेतो मनोऽभिमन्यमानमधिष्ठानभूतं वा यस्य तस्मै मनोऽभिमानि-

रुद्राधिष्ठात्रे । मीढुष्टमाय सकृत्तमाय । तव्यसे अभिवृद्धाय भक्ताभीष्ट-वर्धकाय वा । तवेति सौत्रो धातुर्वृद्ध्यर्थ इति भट्टभास्करोक्तेः । तादृशपरमात्मनो हृदि मनसि शन्तममतिशयेन सुखकरं स्तुत्यादि-रूपवचनं प्रवोचेम वदाम । सर्वो ह्येष रुद्र इत्यादि प्राग्वत् ।।

**सा.आ.–** इदानीमाहङ्कारिकरुद्रं स्तौति ।। **कद्रुद्रायेति** । कुत्सिताहङ्काराभिमानिने रुद्रायेत्यर्थः । छान्दसत्वात्कदादेशः कत्थ श्लाघायामित्यतः क्विपि कदिति रूपमिति माधवः । प्रचेतसे प्रकृष्ट-ज्ञानयुक्ताय । मीढुष्टमायातिशयेन भक्तानामभीष्टसेचकाय । तव्यसे दुष्टहिंसकाय वर्धयित्रे वा । तु इति सौत्रो धातुर्गतिवृद्धिर्हिंसासु । स्तुधातोरेतद्रूपमिति माधवोक्तं तु न युक्तम् । एतिस्तुशसिति क्यबापत्तेः । तुधातोरेवोपपत्तौ छान्दससकारलोपकल्पनस्यायुक्तत्वाच्च । हृदयवासिने मनोऽभिमानिन इत्यपि केचित् । शन्तममतिशयेन सुखकरं स्तोत्रं वोचेम कथयाम । सर्वो ह्येष इत्युक्तार्थम् । कद्रुद्रायेत्यस्य पूर्वरुद्रप्रतिपादकत्वे एतत्समानानुपूर्विकिप सर्वो ह्येष इति पूर्ववाक्येन पौनरुक्त्यम् ।। अ०२६ ।।

**यस्य वैकङ्कत्यग्निहोत्रहवणी भवति प्रत्येवास्याहुतय-स्तिष्ठन्त्यथो प्रतिष्ठित्यै ।। अ० २७ ।।**

**धी.ती.–** ।। यस्य रुद्रान्तर्गतपरमात्मोपासकस्याग्निहोत्रहवणी अग्निहोत्रहोमपात्रविशेषरूपा अग्निहोत्रस्थानरूपा वा । वैकङ्कती विकङ्कताख्यवृक्षविशेषनिर्मिता भवति । अस्याः प्रत्याहुतयस्तिष्ठन्ति यजमानसङ्गता भवन्ति । अस्यार्थोऽनन्तरं मङ्गलादिप्रतिष्ठार्थमाहुतयः प्रतितिष्ठन्ति । रुद्रान्तर्गतभगवदुपासकस्य यजमानप्रतिष्ठार्थमाहुत्यादि-सम्पत्तिरेवोत्तरफलमिति भावः । सर्वो ह्येष रुद्र इत्यादि प्राग्वत् ।।

**सा.आ.**– अग्निं स्तौति ।। **यस्येति** । यस्याग्नेर्होमार्थं वैकङ्कती विकङ्कताख्यवृक्षनिर्मिताऽग्निहोत्रहवणी भवति । अस्याग्नेः । अनया दत्ता इति शेषः । अनयैवाग्निहोत्रहवण्यैव दत्ता आहुतयः प्रतितिष्ठन्ति तृप्तिहेतवो भवन्ति । यद्वाऽग्नेराहवनीयादिस्थाने प्रकर्षेण स्थितिहेतवो भवन्ति । अथोऽनन्तरं प्रतिष्ठित्यै । यजमानस्येति शेषः । स्वर्ग-लोके प्रकर्षेण स्थित्यै भवन्तीत्यर्थः ।। अ० २७ ।।

**कृणुष्व पाजः प्रसितिं न पृथ्वीं**
**याहि राजेवामवाँ इभेन ।।**
**तृष्वीमनु प्रसितिं द्रूणानोऽस्ताऽसि विध्य**
**रक्षसस्तपिष्ठैः ।। १ ।।**

**धी.ती.**– ।। अथ मुक्तिप्रतिबन्धकरक्षोघ्नान्मन्त्रान् जप्यत्वेन विधत्ते ।। **कृणुष्वेति** । कृणुष्व पाज इति संहितायाः प्रथमाध्याये द्वितीयप्रपाठकेऽन्तिमेऽनुवाके समाम्नाताः कृणुष्व पाज इत्याद्याः पञ्च ऋचः । यजमानेन जाप्या इति शेषः । हे अग्ने पृथ्वीं विस्तृतां प्रसितिं न बन्धिनीमिव । बन्धनं प्रसितिस्त्रियामिति कोशात् । पाजो बलं मह्यं कृणुष्व कुरुष्व । यथा मृगयुर्मृगग्रहणाय महतीं वागुरां वनेषु प्रसारयति । तथा त्वमपि रक्षांसि हन्तुं महद्बलं मयि देहीत्यर्थः । इभेन गजेनोपलक्षणयाऽमवान् आयुधवान् तृष्वीं शीघ्रं आगच्छन्तीं प्रसितिं शत्रुसेनां अनुद्रूणानः क्रमेण हिंसन् । त्वं राजेव याहि । यथा राजाऽऽयुधपाणिर्गजादिसहितः परसेनां हन्तुं याति । तथा त्वमप्येतादृशः सन् याहि । अथ तपिष्ठैस्तपनशीलैरायुधै रक्षसो राक्षसान् विध्य भिन्धि । तत्र कारणमस्ताऽसीति । यतः

कारणाच्छत्रूणां निरसनशीलोऽसि अतो ज्ञानप्रतिबन्धकीभूतान् राक्षसा-न्विध्य ताडयेत्यर्थः ॥

**सा.आ.–** कृणुष्वेति । कृणुष्वेत्याद्याः पञ्च ऋच एतमेवाग्निं स्तुवन्तीत्यर्थः । माधवस्तु यस्येति पूर्ववाक्ये विकङ्कतवृक्षप्रशंसा । यस्येत्यस्याग्निहोत्रिण इत्यर्थः । कृणुष्वेत्यादेरेता रक्षोघ्न्यः पञ्च ऋचः प्रतिबन्धकनिवारणाय जपितव्या इत्यर्थ इत्याह । तन्न शोभनम् । देवताप्रशंसाया एव पूर्वत्रोत्तरत्र च दर्शनेन देवताप्रशंसापरताया एवौचित्यात् ॥ १ ॥

**तव भ्रमास आशु या पत-**
**न्त्यनुस्पृश धृषता शोशुचानः ॥**
**तपूꣳष्यग्ने जुह्वा पतङ्गान-**
**सन्दितो विसृज विष्वगुल्काः ॥ २ ॥**

**धी.ती.–** ॥ हे अग्ने अग्निशब्दवाच्याग्न्यन्तर्गतभगवन् । तव भ्रमासो भ्रमणशीला विष्फुलिङ्गा इत्यर्थः । आशु या आशु पतन्ति ये निष्पतन्ति । धृषता धर्षकतया । शोशुचानो भृशं दीप्यमानोऽनुस्पृश । तैर्विष्फुलिङ्गैरनुदह । हे अग्ने भगवन् । तपूंषि औष्ण्यलक्षणतापान् पतङ्गान् तपनशीलान् उल्का ज्वाला ये तत्र विष्वग् इतस्ततो विसृज निस्सारय । जुह्वा ज्वालयाऽसन्दितोऽखण्डितः सन् एवं कुरु । अनेन दाहकारणमुक्तं भवति ॥ २ ॥

**प्रतिस्पशो विसृज तूर्णितमो-**
**भवा पायुर्विशो अस्या अदब्धः ॥**

**यो नो दूरे अघशꣳ सो यो**
**अन्त्यग्ने माकिष्टे व्यथिरादधर्षीत् ।। ३ ।।**

धी.ती.– तूर्णितमस्त्वरिततमः सन् । तमघशंसं प्रति विसृज । आयुधानीति शेषः । किञ्चास्या अस्मदादीयाः विशः प्रजायाः पायुः पालयिता । अदब्धः केनाप्यप्रतिहतश्च भवा भव । किञ्च माकिष्टे किं कश्चिदपि ते त्वामदधर्षीत् अधर्षयत् । व्यथिरा ते तुभ्यं व्यथिता च मा भूयादित्यर्थः ।। ३ ।।

**उदग्ने तिष्ठ प्रत्यातनुष्वन्य ।**
**मित्राꣳ ओषतात्तिग्महेते ।।**
**यो नो अरातिꣳ समिधा न चिक्रे**
**नीचा तं धक्ष्यत सन्नशुष्कम् ।। ४ ।।**

धी.ती.– ।। उदित्यस्य तिष्ठेत्यनेन सम्बन्धः । हे अग्ने भगवन् । उत्तिष्ठ । उत्थानान्तरं शत्रून् प्रत्यातनुष्व तेजोभव । हे तिग्महेते तीक्ष्णायुध । अमित्रान् अस्मच्छत्रून् अज्ञानप्रतिबन्धकीभूतान् । ओषतात् नितरां दाहय । नोऽस्माकमरातिमदानं च यो नोऽस्मभ्यं न किञ्चिदपि चिक्रे ददाति तं नीचा न्यग्भूतं शुष्कं सन्न काष्ठमिव । हे समिधा सम्यग्दीधमाना धक्ष्यत ।। ४ ।।

**ऊर्ध्वो भव प्रतिविध्याध्य-**
**स्मदाविष्कृणुष्व दैवान्यग्ने ।।**
**अव स्थिरा तनु हि यातुजूनां**
**जमिमजामिं प्रमृणीहि शत्रून् ।। ५ ।।**

धी.ती.– ।। हे अग्ने तदन्तर्गतभगवन् । त्वमूर्ध्वः सर्वोत्तमः । अध्यस्मत् अग्निनिमित्तं प्रतिविध्य प्रतियोद्धा भव । तदर्थं किं कर्तव्यमिति चेत् । दैव्यानि देवसम्बन्धीनि वीर्याण्याविष्कृणुष्व प्रकटय । यातुजूनां यातुधानानां स्थिरा स्थिराणि वीर्याणि । अवतनु हि शिथिलीकुरु । ततः शिथिलीकृत्य जामिं पुनरुक्तमजामिमपुनरुक्तं च शत्रून्प्रमृणीहि मारय । यद्वा जामिं स्वसम्बन्धिनमजामिमसम्बन्धिनं च शत्रून्हत्वा मां रक्षयेत्यर्थः ।। ५ ।।

**अदितिर्देवा गन्धर्वा मनुष्याः पितरो सुरास्तेषाꣳ सर्वभूतानां माता मेदिनी महता मही सावित्री गायत्री जगत्युर्वी पृथ्वी बहुला विश्वा भूता कतमाकायासा सत्येत्यमृतेति वसिष्ठः ।। ६ ।। अ० २८ ।।**

धी.ती.– ।। अदितिशब्दवाच्यः परमात्मा तेषां सर्वभूतानां मातेति सम्बन्धः । कानि सर्वभूतानीत्यत आह ।। **देवा इत्यादिना ।** देवास्तत्त्वदेवास्तत्समाश्च व्याप्तोपासका ऋषिगन्धर्वादयः । देवसर्गस्त्वष्टविध इति तृतीयस्कन्धभागवते प्रोक्ताष्टविधदेवा इति । तात्पर्ये च देवशब्दितव्याप्तोपासकानामष्टविधत्वोक्तेः । गन्धर्वास्त्रिविधा देवगन्धर्वा मनुष्यगन्धर्वा असुरप्रेष्या असुरगन्धर्वा इति । मनुष्या अर्वाक्स्रोतसंज्ञकास्ते चैकविधाः । अर्वाक्स्रोतस्तु नवमः क्षत्तरेकविधा नृणामिति । पितरश्चिरपितर एकविधाः । इदमुपलक्षणम् । अन्ये ऋष्यादयोऽपि । असुरा दैत्यरक्षः पिशाचाश्च मर्त्याधमभेदेन चतुर्विधाः । तेषामसुरत्वं चासुभिः परप्राणिर्हिंसादिभिः स्वासुतर्पकत्वादैत्यरक्षःपिशाचका मर्त्याधमाश्चतुर्विधेति तत्त्वसङ्ख्यानात् । तेषां

सर्वभूतानां देवादीनां तदतिरिक्तसर्वप्रणिनां चादितिः- सर्वमत्तीति तददितेरदितित्वम् । अत्ता चरचरग्रहणादिति श्रुतिसूत्राभ्यामदिति शब्दवाच्यहरेर्मूर्तिर्माता । अव्यवधानेन निर्मात्री । अदितिर्माता स पिता स पुत्र इत्यादिश्रुत्यन्तरसमाख्यानात् । मेदिनी पुष्टेति यावत् । या च महता महत्तत्वाभिमानिना चतुर्मुखेन मही पूज्या । सर्व-प्राणिप्रसवितृत्वात्सवितृनामकसूर्यसम्बन्धित्वाद्वा सावित्री मूर्तिः । षूञ् प्राणिप्रसव इति धातोः तृच् प्रत्यये ऋन्नेभ्यो ङीबिति स्त्रीत्वविवक्षया ङीपि च सावित्रीरूपसिद्धेः । गायत्री गानत्राणकर्त्री । गायति च त्रायति चेति श्रुतेः । जगती सर्वदा सर्वत्र गतिमती । उर्वी उत्कृष्टा च पृथ्वी, प्रथनाद्विस्तृतत्वात्पृथिवीनाम्नी भगवन्मूर्तिः । यावद्बहुला बहुरूपा । विश्वा विशः प्रजा वाति गच्छतीति । विशुपपदा-द्वाधातोरातोऽनुपसर्गे क इति कः । सर्वप्राणिगतेति यावत् । भूता पूर्वमेव विद्यमाना पुरातनेति यावत् । कतमा ब्रह्माद्युत्तमाऽतिशयित-सुखस्वरूपा वा । साऽदितिः सा सत्या यथार्थस्वरूपा सर्वेषां सद्भावप्रापिका वा । अमृता नित्यमुक्ता भगवन्मूर्तिरिति । वसिष्ठो ब्रह्मपुत्र इति । वक्तीति शेषः । अनेनोत्तरार्धेन ज्ञानिसम्मतिरुक्ता भवति । अनेन वाक्येनादितिशब्दवाच्याया भगवन्मूर्तेः सर्वप्रसवितृत्व-कर्तृत्वसर्वरक्षकत्वसर्वदातृत्वसर्वत्रगमनशीलत्वादिकमुक्तं भवति ॥

**सा.आ.–** पृथिवीदेवतां स्तौति ॥ **अदितिरिति** । पृथिव्येव कश्यपपत्नी सञ्जातेंत्यादिरूपा । अत एव काश्यपीति नाम । तेषां देवादीनां सर्वभूतानां सर्वप्राणिनां च माता । यद्यपि दितिरसुरमाता तथाऽपि केषाञ्चिदसुराणां मातैतच्छास्त्रप्रामाण्यात् । मधुकैटभमेदसा जातत्वान्मेदिनीशब्दवाच्या । महता महत्त्वेन मही महीशब्दवाच्या ।

सावित्रीगायत्रीजगतीशब्दैर्योगविशेषेण वाच्या । उरुत्वादुर्वीशब्दवाच्या । पृथुराजेन समीकृतत्वात्पृथुत्वाद्वा पृथिवीशब्दवाच्या । बहूनर्थान् लातीति बहुलशब्दवाच्या । विशति सर्वस्मिन्निति विश्वाशब्दवाच्या । पञ्चभूतान्तर्गतत्वात्पूर्वं विष्णुना जातत्वाद्वा भूता भूतशब्दवाच्या । कं सुखं जलं वाऽस्यामिति का । अर्शआद्यच् । अतिशयेन का कतमा । तसिलादिष्विति पुंवद्भावः । कायाः शरीराण्यासतेऽस्यामिति कायासा, त्रीणि पदानि वा । प्रपञ्चासत्यत्ववादखण्डनाय सत्येति नाम निर्दिष्टम् । मृतिरहितत्वादमृतेति नाम । वसिष्ठ एवं वसिष्ठ आहेत्यर्थः

॥ अ० २८ ॥

**आपो वा इद॒ँ सर्वं विश्वा भूतान्यापः । प्राणा वा आपः पशव आपोऽन्नमापोऽमृतमापः सम्राडापो विराडापः स्वराडा पश्छन्दांस्यापो ज्योतीष्यापो यजू॒ँष्यापः सत्यमापः सर्वा देवता आपो भूर्भुवः सुवराप ओम् ॥ अ० २९ ॥**

धी.ती.– ॥ वृष्ट्यभावकृतोपद्रवपरिहारिणमब्देवताभगवन्मन्त्रमाह ॥ **आप इति** । यज्जगदस्ति भूभूधरसागराङ्कुरादिकं तत्सर्वमापोऽबुपलक्षित-तेजोऽबन्नात्मकं पञ्चभूतात्मकं वा तत्सर्वं प्राप्नोति व्याप्नोतीति अप्शब्दितभगवदधिष्ठानभूता । तासां त्रिवृतं त्रिवृतमेकैकामकरोदिति श्रुतेः । पञ्चभूतात्मकं सर्वं तदप्येकविवक्षयेति स्मृतेश्च । सर्वप्राप्ति-मत्त्वात्सर्वत्वं भगवतो न तु सर्वाभेदात् । सर्वं समाप्नोषि ततोऽसि सर्व इति गीतोक्तेश्च । तत्किं सर्वमित्यतः क्रमेणाह ॥ **विश्वा भूतानीति** । समस्तप्राणिनस्तच्छरीराणि च पञ्चमहाभूतानि चाबुप-लक्षितपञ्चमहाभूतात्मकान्यप्शब्दितभगवता व्याप्तानि । अप्शब्देन

भूतान्तरोपलक्षणं तु भूयस्त्वाच्चापामिति सूत्रसिद्धसर्वशरीरेषु मिलित्वाऽवंशस्याधिक्यनिबन्धनं ज्ञेयम् ।। **प्राणा इति** । इन्द्रियाणि पञ्च प्राणा वा आपस्तदुपलक्षितपञ्चमहाभूतोपचिता अप्शब्दित-तत्तन्नियामकव्याप्ता भगवदधिष्ठिताश्च । 'तेषां भूतैरुपचयः सृष्टिकाले विधीयत' इति वचनात् । पशवो गवादयस्तदुपलक्षितकृमिकीटकादय-श्चापस्तदुपलक्षितपञ्चमहाभूतात्मकशरीरिणः । अन्नं व्रीहियवादिकम् । आपो वा अन्नमिति श्रुतेः । अमृतं सुरैरुपजीव्यं सुधादिकमापस्तदु-पादानमिति प्राग्वत् । सम्राट् सम्यग्राजत इति सम्राट् सूत्रनामा वायुः । विशेषेण राजत इति विराट् । ब्रह्माण्डदेहः पुरुषः विराट् चतुर्मुखश्च, स्वराट् स्वयमेव राजत इति स्वराट् । अहङ्कार-तत्त्वाभिमानी रुद्रश्चापः तेजोऽबन्नात्मकशरीरिणः । सर्वव्याप्ताप्शब्द-वाच्यभगवदधिष्ठिताश्च । छन्दांसि गायत्र्यादीन्यापो गायत्रीशब्द-वाच्याप्शब्दितो भगवान् । छन्दोभिधानान्नेति चेन्न तथा चेतोर्पण-निगदात्तथा हि दर्शनमिति सूत्रात् । ज्योतींष्यापः प्राग्वत् । यजूंष्यापः अनियताक्षराणि वेदवाक्यानि । सत्यं यथार्थवचनं मीमांसा वा । मीमांसा सत्यमिति तलवकारभाष्योक्तेः । आपोऽप्शब्दित-भगवत्प्रतिपादकानि । अयं वै लोकः प्रथमा महानाम्नीत्यादि-वत्प्रतिपाद्यप्रतिपादकयोरभेदव्यपदेशः । सर्वा देवता इन्द्राद्या भूर्भुव-स्सुवरादित्रयो लोकाश्चापः । अप्शब्दितदेशकालगुणतः पूर्णं ब्रह्माधिष्ठितं तदन्तर्यामिकं चेत्यर्थः । न तु तदात्मकम् । सर्वान्तर्यामिको विष्णुः सर्वनाम्नाऽभिधीयत इत्यादेः । विश्वा भूतान्याप इत्यादिसामानाधि-करण्यं तु गौणम् । अनेन वाक्येन भगवतः सर्वान्तर्यामित्वं तत्तच्छक्तिप्रबोधकत्वं ब्रह्मादिसर्वचेष्टकत्वं सर्वदेवतान्तर्गतत्वं चाप्शब्दितभगवतः प्रतिपादितं भवति ।।

**सा.आ.–** इदानीमपः स्तौति ।। आप इति । तद्विवृणोति ।। **विश्वेत्यादिना** । विश्वा विश्वानि भूतानि प्राणिन आपोऽबुपजीव्याः । एवमग्रे । प्राणा वै निश्चयेनापः । आपोमयः प्राण इति श्रुतेः । पशवो मनुष्यभिन्ना जन्तव एषां भूतत्वेऽपि जलजन्तूनां विशेषेणोदक-जीवित्वात्पृथगुक्तिः । अन्नमापोऽम्मात्रजीवित्वाद्व्रीह्यादेः । अमृतमापो द्रवत्वान्मधुरत्वाच्च । सम्राट् राजा आपः । वृष्टौ प्रजाभ्यः कृषिद्रव्यलाभादावुपजीव्यो राजा । यद्वा सोमो राजा । चन्द्र उदकमयः प्रसिद्धः । विराडाप इदं विचार्यम् । स्वराट् नारायणः । सहस्रशीर्षं देवमित्यनुवाकान्ते तस्य स्वराट् शब्दवाच्यत्वोक्तेः । स ह्युदकवासी । 'आपो नारा इति प्रोक्ता आपो वै नरसूनवः । अयनं तस्य ताः पूर्वं तेन नारायणः स्मृत' इति स्मृतेः । समुद्रान्तः शायित्वप्रसिद्धेश्च । छन्दांस्यापः । अत्र बीजं विचार्यत एवं यजूंषी-त्यत्रापि । ज्योतींष्यापो जाठराग्नेर्विद्युतश्चाबुपजीव्यत्वाद्दीपस्य तैल-जीवित्वाच्च । सत्यमापः शपथस्य जलग्रहणपूर्वकत्वात् । वरुणस्य सत्यदेवतात्वाद्वा । सर्वा देवता आपः स्पष्टम् । भूर्भुवस्सुवरेत-ल्लोकत्रयमाप एवेत्यर्थः । ॐ आप इति शेषः । प्रणवोऽप्याप इत्यर्थः ।। अ० २९ ।।

**आपः पुनन्तु पृथिवीं पृथिवी पूता पुनातु माम् । पुनन्तु ब्रह्मणस्पतिर्ब्रह्म पूता पुनातु माम् । यदुच्छिष्ट-मभोज्यं यद्वा दुश्चरितं मम । सर्वं पुनन्तु मामापोऽसतां च प्रतिग्रहꣴ स्वाहा ।। अ० ३० ।।**

**धी.ती.–** ।। आपोऽश्नात्यन्तरत एव मेध्यो भवतीति श्रुत्या आचमनान्तशुद्धिहेतुत्वमभिमन्त्रितमेवापामिति भावेन माध्याह्निकसन्ध्या

यास्तदभिमन्त्रपमन्त्रमाह ।। **आपः पुनन्त्विति** । आपोऽबूदेवता भगवन्मूर्तयः । पृथिवीं भुवं यस्यां भुवि स्थित्वाऽहं सन्ध्यामुपासे तां भुवं तदभिमानिन्यो देवतास्तदन्तर्गतास्तच्छब्दवाच्या भगवन्मूर्तयश्च पुनन्तु पवित्रयन्तु । अद्भिः पूता पृथिवी मां पुनातु । ब्रह्मणस्पतिः ब्राह्मणानां वेदानां वा पतिः परमात्मा पुनातु मां पुनात्वित्यर्थः । वचनस्य व्यत्ययश्छान्दसः । ब्रह्मणा वेदेन पूता वेदोच्चारणपूर्वकमभि-मन्त्रणादिना पूता पृथिवी मां पुनातु । यदुच्छिष्टं पामरभुक्तशेषादि, अभोज्यं शूद्रद्वेष्यान्नादि, यद्वा दुश्चरितमगम्यागमनादि यदसतां दुर्दानादि प्रतिग्रहादि तत्सर्वं मां चाप आचमनेन पवित्रयन्तु । स्वाहा आत्माग्नौ सुहुतमस्तु ।।

**सा.आ.–** माध्यान्हसन्ध्यायामभिमन्त्रितजलाचमनमन्त्रमाह ।। **आप इति** । पूर्वार्धं स्पष्टार्थम् । पुनन्तु ब्रह्मणस्पतिः । आप इत्यपि बोध्यम् । ब्रह्मणस्पतिः गणपतिर्बृहस्पतिर्वा । आचार्य इति माधवः । एते मां पुनन्त्वित्यर्थः । ब्रह्मपूता हृदिस्थेन ब्रह्मणा परब्रह्मणा तपसा वा पूता सरस्वती उमा वा मां पुनातु । यदुच्छिष्टमन्योच्छिष्टमभोज्यं गणान्नादि । भुक्तमिति शेषः । मम । यद्वा यदपि दुश्चरितं निषिद्धा चरणमगम्यागमनादि असतां प्रतिग्रहं च सर्वमापः पुनन्तु मामे-तस्मात्सर्वस्माज्जनितपापवियुक्तं मां कुर्वन्त्वित्यर्थः । सर्वमिति प्रथमा पञ्चम्यर्थे । स्वाहा तदर्थमिदं जलं जठराग्नौ हुतमस्तु ।।अ० ३०।।

**अग्निश्च मा मन्युश्च मन्युपतयश्च मन्युकृतेभ्यः । पापेभ्यो रक्षन्ताम् । यदन्हा पापमकार्षम् । मनसा वाचा हस्ताभ्याम् । पभ्द्यामुदरेण शिश्ना । अहस्तदवलुम्पतु ।**

**यत्किञ्च दुरितं मयि । इदमहं माममृतयोनौ । सत्ये ज्योतिषि जुहोमि स्वाहा ।। अ० ३१ ।।**

धी.ती.– ।। अथ सायंसन्ध्याकाले जलप्राशनमन्त्रमाह ।। **अग्निश्चेति** । अग्निः प्रसिद्धोऽग्र्यत्वादिनाऽग्निशब्दवाच्यो हरिश्च । मन्युः तापसो मन्युः क्रोधाभिमानी रुद्रस्तन्नियामको नृहरिश्च । मन्युपतयोऽन्ये च क्रोधाभिमानिनः । मन्युकृतेभ्यो मन्यूपलक्षितकामक्रोधाद्यरिषड्वर्गकृतेभ्यः पापेभ्यः । ल्यब्लोपनिमित्ता पञ्चमी । पापानि परिहृत्य मां रक्षन्तामित्यर्थः । किञ्च यदन्हा अतीतेऽस्मिन्नहनि पापमकार्षं पापं कृतवानस्मि । कैः करणैः । मनसा परहिंसापरवित्तापहरणचिन्तनं मानसं पापम् । वाचा कृतमनृतभाषणार्यदूषणादिकम् । हस्ताभ्यां कृतं दुष्टप्रतिग्रहब्राह्मणताडनादिकम् । ब्राह्मणो न हन्तव्य इति निषेधात् । पद्भ्यां कृतं पदा गोस्पर्शनादिकम् । गौर्न पदा स्प्रष्टव्येति श्रुतेः । उदरेण नीचसेवयोदरभरणादिना । शिश्ना शिश्नेन कृतमन्ययोनिकुयोन्यादौ रेतस्सिञ्चनरूपम् । नायोनौ रेतः सिञ्चेदित्युक्तेः । तदतिरिक्तं यत्किञ्चिद्दुरितमिन्द्रियान्तरैरनुष्ठितम् । अस्पर्शस्पर्शनमन्नास्वादनमश्राव्यश्रवणादिकं पापं मयि वर्तेत । तत्सर्वमहरभिमानी मुख्यप्राणस्तद्गतो हरिश्चावलुम्पतु विनाशयतु । अहरेव प्राण इति, प्राणो ह्यहरिति श्रुतिस्मृतिभ्यां तत्सिद्धम् । तत्सर्वमिदमहं मां चामृतयोनौ मुक्तिकारणीभूते सत्ये ज्योतिषि यथार्थज्ञानरूपे ज्योतिश्शब्दवाच्येऽग्नौ तदन्तर्गते भगवति च । ज्योतिश्चरणाभिधानादित्यधिकरणे सिद्धे । जुहोमि स्वाहा सहुतमस्तु ।।

**सा.आ.–** सायं सन्ध्याकाले जलाचमनमन्त्रमाह ।। **अग्निश्चेति** । मन्युमन्युपतिशब्दौ क्रोधाभिमानितत्स्वामिदेवतापरौ । एते देवा

मन्युकृतेभ्यः क्रोधकृतेभ्यः पापेभ्यो मा मां रक्षन्ताम् । अह्ना अह्नि । अपवर्गे तृतीया । मनआदिभिर्यत्पापमकार्षमहं कृतवान् । तत्सर्वमहः तदभिमानिदेवता अवलुम्पतु नाशयतु । पराहितचिन्तनादि मानसं पापम् । परुषानृतादिभाषणं वाचिकम् । अभिचारहोमपरस्त्री-स्तनस्पर्शादि हस्तकृतम् । गोब्राह्मणादेः पदा स्पर्शादि पादकृतम् । अभोज्यभोजनमुदरकृतम् । अगम्यागमनं शिश्नकृतम् । शिश्नेत्यत्र तृतीयाया डादेशः पूर्वसवर्णो वा । मय्येतदन्यद्यत्किञ्चिद्दुरितं तदिदं सर्वं मां चामृतयोनौ मोक्षहेतौ सत्ये ज्योतिषि परब्रह्माख्येऽग्नौ जुहोमि । पापहोमो नाम भस्मीकरणम् । आत्मनो होमो नाम परमात्मनि शुद्धस्य स्वात्मनः संयोजनम् । तदर्थमिदं जलं स्वाहा हुतमस्तु ।। अ० ३१ ।।

**सूर्यश्च मा मन्युश्च मन्युपतयश्च मन्युकृतेभ्यः । पापेभ्यो रक्षन्ताम् । यद्रात्रिया पापमकार्षम् । मनसा वाचा हस्ताभ्याम् । पद्भ्यामुदरेण शिश्ना । रात्रिस्तदव-लुम्पतु । यत्किञ्च दुरितं मयि । इदमहं मामृतयोनौ । सूर्ये ज्योतिषि जुहोमि स्वाहा ।। अ० ३२ ।।**

**धी.ती.–** ।। अथ प्रातः सन्ध्याकाले आचमनार्थं जलाभिमन्त्रण-मन्त्रमाह ।। **सूर्यश्चेति** । सूर्यः प्रसिद्धः सूरिगम्यत्वात् एतदन्तर्गतो हरिश्च । मन्युः क्रोधाभिमानिनो रुद्रादयस्तदन्तर्गतस्तन्नियामको हरिश्च मन्युपतय एते । अन्यद्गतम् । रात्रिः प्रसिद्धरात्र्यभिमानिनी दुर्गा रयिश्च तच्छब्दवाच्यो हरिश्च रतिदत्वादिना रात्रिशब्दोक्तः । वाङ्निशीति षट्प्रश्नभाष्ये । रतिप्रदत्वादित्यादि ऐतरेयभाष्यवचनाच्च ।

तदवलुम्पतु सूर्यो रात्रौ तत् मनआदिना कृतं पापम् । सूर्ये ज्योतिषीदं पापं मां च जुहोमि हुत्वा पापादिकं मां पवित्रं करोमित्यर्थः ।।

**सा.आ.–** सूर्यश्चेत्यादि पूर्ववव्द्याख्येयम् । प्रातर्जलाचमनमन्त्रोऽयम् ।। अ० ३२ ।।

**ॐमित्येकाक्षरं ब्रह्म । अग्निर्देवता ब्रह्म इत्यार्षम् । गायत्रं छन्दं परमात्मं सरूपम् । सायुज्यं विनियोगम् ।। अ० ३३ ।।**

**धी.ती.–** ।। अथ प्रणवजपार्थं प्रणवगायत्र्योरुपासार्थं वा यो ह वा अविदितेति श्रुत्या ऋषिदेवताछन्दोज्ञानाभावेऽनर्थोक्तेस्तत्सर्वमाह ।। **ॐमित्येकाक्षरमिति** । वेदव्याख्येयत्वाद्वेदमातृत्वाच्च तस्य प्रधाना-प्रधानदेवते आह ।। **अग्निर्देवतेति** । अग्नितदन्तर्गतपरशुरामश्च देवता । सैषा गायत्री चतुष्पदा । तत्राद्यः पाद ओमित्येकाक्षरम् । अत्रैकाक्षरमिति समुदायाभिप्रायेण । अकारोकारमकारात्मकश्रुतेः । अकारोकारमकार इति तानेकधा समभवत्तदेतदोमिति नारायणोप-निषदुक्तेः । तन्त्रसारे तु सोऽयमष्टाक्षरो मत इत्यष्टाक्षरत्वोक्तिः । नादबिन्द्वादीनां वर्णधर्माणामक्षरत्वमुपचारात् । तदुक्तं बृहद्भाष्ये गायत्रीब्राह्मणव्याख्यावसरे । 'गायत्रीमुखतो विष्णुर्ध्येयः सर्वात्मना हरिः । संहर्ता सर्वदोषाणामग्निस्थः सर्वदाहकः । नित्यानन्दोऽग्निवर्णश्च रामः परशुभृत्सदा' इति । ऋषिमाह ।। **ब्रह्मेति** । ब्रह्माख्य ऋषिसम्बन्धि ओमित्येकाक्षरमित्यर्थः । परब्रह्मर्षिकामित्यर्थः । छन्दो वक्ति । **गायत्रमिति** । दैवीगायत्रीछन्दस्कमित्यर्थः । साक्षा-

देवतान्तरमाह ।। **परमात्ममिति** । परमात्माख्यं देवतेत्यनुकर्षः । परमात्मदेवताकमिति वा । 'ऋषिश्च दैवतैकोऽहं तारादीनां विशेषतः। छन्दो मदीया गायत्री ताराष्टाक्षरयोर्मता' इति । तन्त्रसारे प्रणवस्य परब्रह्म ऋषिः परमात्मा देवता दैवी गायत्री छन्द इति तान्त्रिकप्रसिद्धेश्च । तस्य प्रणवस्य विनिगमनमाह ।। **सरूपमिति** । सरूपं समानरूपता सारूप्यमिति यावत् । भावप्रधानो निर्देशः । सायुज्यं परमात्मसायुज्यम् । विनियोगमधिकारिभेदेनोभयतत्फलक-मित्यर्थः । यद्वा ओमित्येकाक्षरं ओमिति गुणपूर्णं ब्रह्म मुख्या-विनाशीत्यर्थः । एकं प्रधानमुद्दिष्टमिति अक्षरमविनाशि चेति छान्दोग्यभाष्यात् ।।

**सा.आ.**– ओमित्येकाक्षरं ब्रह्म । अपरं ब्रह्म । अग्निर्देवता अग्निरक्षरदेवता न तु प्रतिपाद्या । माण्डूक्याद्युपनिषदस्तु यो वेदादा-विति पूर्वत्र, ओमित्येकाक्षरं ब्रह्म व्याहरन्मामनुस्मरन् । ॐ तत्सदिति निर्देशो ब्रह्मणस्त्रिविध इति गीतायां च ब्रह्मणस्तत्प्रतिपाद्य-त्वोक्तेः । यद्वा प्रणवप्रकृतीनामकारोकारमकाराणामग्निवायुसूर्याः क्रमेण वाऽवान्तरदेवताः । अग्न्यादीनां प्रणवार्थव्याहृतिदेवतात्वात् प्रणवार्था व्याहृतय इति वचनात् । व्याहृतीनां प्रणवाक्षराणां च परब्रह्मांशा ब्रह्मविष्णुमहेश्वरा मुख्यदेवता अग्निर्देवतेति तूपलक्षणम् । ब्रह्मेत्यार्षं ब्रह्मेति पदमार्षं ऋषेरिदमार्षम् । ऋषिबोधकम् । असन्धिश्छान्दसः । परब्रह्म ऋषिरिति तात्पर्यम् । गायत्रं गायत्री छन्दं छन्द इत्यर्थः । सरूपं अधिष्ठाताग्निसमरूपम् । परमात्मं परमात्मा । मुख्यदेवतेति शेषः । तदधिष्ठानभूतोऽग्निरमुख्यदेवतेति सूचितम् । सायुज्यं ब्रह्मसायुज्यं विनियोगं विनियोगविषयः । ब्रह्मसायुज्ये विनियोग इति फलितोऽर्थः ।। अ० ३३ ।।

**आयातु वरदा देवी अक्षरं ब्रह्म सम्मितम् ।।**
**गायत्रीं छन्दसां मातेदं ब्रह्म जुषस्व मे ।। १ ।।**

**यदन्हात्कुरुते पापं तदन्हात्प्रतिमुच्यते ।।**
**यद्रात्रियात्कुरुते पापं तद्रात्रियात्प्रतिमुच्यते ।।**
**सर्ववर्णे महादेवि सन्ध्याविद्ये सरस्वति ।। २ ।।अ०३४।।**

धी.ती.– एवमृष्यादिकमाभिधाय स्वस्मिन्प्रणवगायत्र्योरवगमन-मर्थयते ।। **आयात्वित्यनुवाकेन** । हृदये चार्कमण्डले, देवीमावाह्य गायत्रीं ततो ध्यायेद्द्विजोत्तम, इति भारद्वाजस्मृतेः । सवितृमण्डलं मे हृदयं चायातु विशेषत उभयत्र सन्निधत्स्वेति यावत् । हृदयसन्निधाने प्रयोजनमाह ।। **अक्षरमिति** । इदं ब्रह्म जुषस्व म इत्येनेनान्वयः । य इदमक्षरमनादिनित्यं ओङ्कारादिरूपं ओमित्याक्रियमाणं ब्रह्मसम्मितं ब्रह्मसमानं ब्रह्मसमव्याप्तं वा । यावद्ब्रह्म विष्ठितं तावती वागिति श्रुतेः । विष्णुना समदेशकालव्याप्तमिदं ब्रह्म प्रणवगायत्र्यादिरूपं शब्दब्रह्म जुषस्व । पुरुषव्यत्ययश्छान्दसः । प्रणवाद्यर्थं बोधयेत्यर्थः । मन्त्रो मन्त्रार्थवचनम् । अन्यस्य स्वात्मनोऽपि वेति वचनान्मन्त्रार्थ ज्ञानमावश्यकम् । अतो मन्त्रार्थं बोधयेत्यर्थः । सर्वदेवताप्रहाणेन प्रणवगायत्रीप्रार्थनं कुत इत्यत आह ।। **गायत्रीति** ।। यतो प्रसिद्ध-गायत्री तच्छब्दवाच्यः परमात्मा छन्दसां वेदानां माता प्रसिद्धगायत्री । वेदमूलभूतवेदमाता गायत्रीति स्मृतेः । गायत्रीशब्दवाच्यो भगवांस्तु वेदानां माता विभागकर्ता वेदार्थज्ञानजनको वा । सवितृमण्डलगायत्री शब्दितभगवत्सन्निधानप्रार्थनफलमाह ।। **यदह्नादिति** । अह्नात् अह्नि रात्र्यात् रात्र्याम् । सुपां सुलुगिति सप्तम्याः पञ्चमी । ततश्च सायं प्रातः सन्ध्यायां सवितृमण्डले गायत्रीशब्दितभगवत्सन्निधानेनाहोरात्रिकृतं

पापं यत् तस्मात् प्रमुच्यत इति यथाक्रममन्वयो ज्ञातव्यः । यद्वा तदन्हस्तद्रात्र्यादिति तत्र भवदित्यर्थः । सूर्यमण्डलसन्निहितगायत्रीशब्द-वाच्यत्वं भगवतः कुत इत्यतस्तल्लक्षणान्याह ।। **सर्ववर्णेति** । स्त्रीरूपविवक्षया स्त्रीलिङ्गनिर्देशः। महादेवीभिर्महान् स्तुत्या स्तुत्यर्थम् । दीप्यतेर्घञ् स्त्रीविवक्षया ङीप् । सर्ववर्णे अप्राकृतशुक्लादिसर्ववर्णोपेते । तस्यैतस्य परमस्य नारायणस्य चत्वारि रूपाणि शुक्लं रक्तं रौक्मं कृष्णमिति भगवतो बहुरूपत्वव्यपदेशात् । विप्रादिसर्ववर्णधर्मोपेता वा । सन्ध्याविद्ये सन्ध्याकाले च ज्ञेयं ध्येया च सरस्वती । गायत्रीपक्षे भगवदनुसरणात्सरस्वतीशब्दवाच्या 'साऽहं तत्सरणात्सदा । सरस्वतीति सम्प्रोक्ता' इति वचनात् । भगवत्पक्षे । सरस्वान् सागरोऽस्या भगवन्मूर्तेराश्रयतया वर्तत इति, सर्वत्र गमनाद्वा सरस्वतीशब्दवाच्या भगवन्मूर्तिः । हे सरस्वति ।।

**सा.आ.– आयात्विति** । देवी वरदा सती सम्मितं वेदान्तैः सम्यङ्निश्चितं ब्रह्म अक्षरं नाशरहितं आयातूपदिशतु । मह्यमिति शेषः । यद्वा देवी आयातु ब्रह्म आयातु । मयीति शेषः । तदेव विवृणोति ।। **गायत्रीमिति** । द्वितीया प्रथमार्थे । छन्दसां माता गायत्री । त्वमिदं ब्रह्म परं ब्रह्म मे मम जुषस्व जोषयस्व त्वदर्थभूतं ब्रह्मतत्त्वं मह्यं प्रतिपादयेत्यर्थः । अह्नात् अह्नि यत्पापं कुरुते तत् तस्मात्पापात् अह्नात् अहोभिमानिदेवताप्रसादात्प्रतिमुच्यते । एवमग्रे बोध्यम् । इदं मन्त्रद्वयमग्निश्च मा मन्युश्च, सूर्यश्च मा मन्युश्चेत्य-नयोरनन्तरं यथाक्रमं योज्यम् । पाठक्रमादर्थक्रमस्य बलवत्त्वात् । सर्ववर्णे शुक्लादिवर्णयुते हे महादेवि । सन्ध्याविद्ये सन्ध्योर्जपित-व्यविद्यारूपे । हे सरस्वति । एतस्य ओजोऽसीत्युत्तरेणान्वयः ।।

१-२ ।। अ० ३४ ।।

ओजोऽसि सहोऽसि बलमसि भ्राजोऽसि देवानां धाम नामासि विश्वमसि विश्वायुः सर्वमसि सर्वायुरभिभूरोम् ॥ १ ॥

गायत्रीमावाहयामि सावित्रीमावाहयामि सरस्वतीमावाहयामि छन्दर्षीनावाहयामि श्रियमावाहयामि ॥ २ ॥

गायत्रिया गायत्रीछन्दो विश्वामित्रऋषिः सविता देवता ॥ ३ ॥

अग्निर्मुखं ब्रह्मा शिरो विष्णुर्हृदयꣳ रुद्रः शिखा पृथिवी योनिः ॥
प्राणापानव्यानोदानसमाना सप्राणा श्वेतवर्णा साङ्ख्यायनसगोत्रा ॥ ४ ॥

गायत्री चतुर्विंशत्यक्षरा त्रिपदा षट्कुक्षिः पञ्चशीर्षोपनयने विनियोगः ॥ ५ ॥

ॐ भूः ॐ भुवः ॐ सुवः ॐ महः ॐ जनः ॐ तपः ॐ सत्यम् ।

ॐ तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि । धियो यो नः प्रचोदयात् ।

ॐ मापोज्योती रसोऽमृतं ब्रह्म भूर्भुवस्सुवरोम् ॥ ६ ॥
अ० ३५ ॥

**धी.ती.**– ।। ओजोऽसि परावष्टम्भनशक्तिरूपा सहोसि बलमसि सहनवती बलवतीति तद्रूपा चासि । ओजो बलं स्थिरांशे चेति कोशात् । ओजोसि प्रकाशविशेषरूपाऽसि । देवानां धामनामाश्रयेति प्रसिद्धाऽसि विश्वमसि सर्वान्तर्याम्यसि । सर्वायुः पूर्णायुष्मती तत्प्रदा चासि । तस्यैव व्याख्यानं सर्वमसीत्यादि । अभिभूरसि सर्वाभिभाविता सर्वोत्तमा चासि । अभि सर्वतो वरो इति वचनात् । सर्वपापतिरस्कर्त्री वा । यः सन्ध्यामुपास्तेऽपहतपाप्मान इति श्रुतेः । ॐ गायत्रीमावहयामि गुणपूर्णत्राणकर्त्रीं भगवन्मूर्तिमावाहयामि प्रातः सन्ध्यायाम् । मध्याह्ने सावित्रीं सर्वजगत्प्रसवित्रीं भगवन्मूर्तिं सावित्रीशब्दवाच्यामात्मन्यावाहयामि । सायाह्ने सरस्वतीमावाहयामि । सैव त्रिरूपा सन्ध्याकलत्रये ध्येया । यथोक्तम् । 'गायत्री नाम पूर्वं स्यात्सावित्री मध्यमे दिने । सरस्वती च सायाह्ने सैव सन्ध्या त्रिषु स्मृता' इत्याह्निकस्मृतौ । छन्दर्षीन् वेदद्रष्टॄनृषीनावाहयामि । श्रियं वा लक्ष्मीं च स्वस्मिन्नावाहवामि । सर्वा आत्मनि सन्निहिता मम गायत्रीजपसिद्ध्यर्थे भवन्त्वित्यर्थः । एवमात्मन्यावाह्य गायत्रीं जपेत् ।

अथ सन्ध्यागायत्रीमन्त्रजपार्थं तस्या ऋष्यादिकमाह ।। **गायत्रिया इति** । गायत्र्याः 'गायत्रीं पूर्वमुच्चार्य भूर्भुवः स्वस्तथैव च । गायत्री प्रणवस्यान्ते जपो ह्येष उदाहृत' इति योगयाज्ञवल्क्यवचनेनाभिहितोपसर्जनीभूतव्याहृतिविष्णुगायत्र्या इत्यर्थः । गायत्र्येव छन्दो ऋषिर्विश्वामित्रो गाधिसूनुः । 'विश्वामित्रस्तु सन्ध्यार्थे तदन्यत्र प्रजापतिः' इति वचनात् । सविता देवता सर्वप्रसवकर्तृत्वात्सवितृनामा श्रीनारायणो देवता । अस्या विश्वामित्रगायत्र्याः अग्निर्मुखं अग्न्यादिदेवास्तज्जन्यास्तदाश्रिताश्च मुखाः । रुद्रश्चाग्निश्चेति पुरुषसूक्तोक्तेः ।

ब्रह्मा शिरोजन्यस्तदाश्रितश्च । विष्णुर्हृदयमित्यत्र विष्णुशब्देन सोम-लताभिमानी चन्द्रो ग्राह्यः । जनितोऽत विष्णोरित्यादावनुव्याख्यान-सुधयोस्तथैव व्याख्यातत्वात् । सोमो हृदयाज्जातस्तदाश्रितश्च । चन्द्रमा मनसो जात इत्युक्तेः । रुद्रः शिखा गायत्रीशब्दितभगवतः शिखाजन्यो रुद्र इत्यर्थः । पृथिवी योनिः । अत्र योनिशब्देन पादो ग्राह्यः । पद्भ्यां भूमिरिति श्रुत्यन्तरात् । पृथिवी पुच्छं प्रतिष्ठेति ब्रह्मवल्ल्युक्तेश्च । पृथिवी पादजन्या तदाश्रितेत्यर्थः ।। **प्राणा-पानेत्यादि** । प्राणापानादयः पञ्च वायवः । प्राणाद्वायुरिति श्रुतेः । नासिक्याभिमन्यमानघ्राणात्पञ्च जातास्तदाश्रिताश्च ।। **श्वेतवर्णेति** । एतदुपलक्षित, 'गायत्री च भवेद्रक्ता सावित्री शुक्लवर्णिता । सरस्वती तथा कृष्णा उपास्या वर्णभेदत' इति स्मृतेः । गायत्र्येकैव प्रातरादि-कालभेदेन नामभेदेन च त्रिरूपा ज्ञेया । अत एव च प्राक् सर्ववर्णेत्युक्तम् । सा गायत्री अप्रधाना । साङ्ख्यायनसमुनिगोत्रोत्पन्ना तद्गोत्रिभिरभिव्यक्तेति यावत् । प्रधाना गायत्रीशब्दवाच्या । विष्णुपक्षे साङ्ख्यायनसमुनि इति गोत्रेत्यर्थः । गायत्री चतुर्विंशत्यक्षरा वेदविशेषरूपा । अप्रधाना गायत्री चतुर्विंशत्यक्षरा ॐकारेण सह चतुर्विंशत्यक्षरेत्येके । तन्न । ॐकारस्य पृथक् पादत्वेनोक्तस्यैतरेय-भाष्यविरोधेन वक्ष्यमाणत्रिपादत्वानुपपत्तेः । सर्वैस्तत्सवितुर्वरेण्यमित्येव गायत्र्यारभ्य इति तान्त्रिकव्यवहारात् । णियमिति वर्णविभागेन चतुर्विंशत्यक्षरत्वं ज्ञेयमिति साम्प्रदायिकाः । त्रिपदा अक्षरात्मिकया पादत्रयी । षट्कुक्षिः तत्सवितुर्वरेण्यमित्याद्यक्षरचतुष्टयात्मकाः षट् कुक्षौ यस्यामिति षट्कुक्षिः । उक्तात्युक्ता तथा मध्येत्यादयश्छन्दो-विशेषाः कुक्षौ यस्या इति तदुत्तरेति यावत् । यद्वा षट्सङ्ख्याता

गायत्रीवर्णदेवता महाचतुर्विंशत्यक्षरेति पञ्चशीर्षा त्रिशिरस्का उपनयने विनियोग इति । उपोऽधिके चेति सूत्रात् । ब्रह्मण्याधिक्यकरणे उपनयनाख्ये कर्मणि विनियोगः । तत्र बटोरुपदेष्टाऽप्यर्थः ।

अथ प्राणायामार्थं भूरित्यादितारकमन्त्रमाह ।। ॐ भूरित्यादि । ॐ भूः रक्षकः । अवते रक्षणार्थं कर्तरि मनुप्रत्ययः । भूः पूर्णः स्फूर्तिरूपश्च । ॐ भुवः भूतिवरो भूरिवीर्यश्च । ॐ सुवः सुबलरूपोऽनन्तसुखरूपश्च । ॐ महः महनीय उत्सवरूपश्च । पूर्णो भूतिवरोऽनन्तसुखो यव्याहृतीरिति इति ऋग्भाष्योक्तप्रमाणात् । भूर्नामा स्फूर्तिरूपत्वाद्भूरिवीर्यत्वतो भुवः । सुवः सुबलरूपत्वान्महनीयत्वतो मह इति शिक्षाभाष्योक्तेः । ॐ जनः जनोलोकगतः। न जायते न जनयति च भुव इति च । जनो न जायत इति जन इति गीताभाष्योक्तेः । अजनान् न जनिर्भुवीति जनो लोकगतानां भुवि जननाभावप्रदत्वात् । ॐ तपः । तप संताप इति धातोः कर्तरि घञ् । शत्रुतापक इत्यर्थः । तप आलोचन इति धातोरालोचनरूपश्च । तपो ब्रह्मेति व्यजानादिति श्रुतेः । ॐ सत्यं सत्यलोकगतं सद्भावप्रापकम् । सत्यं परं ब्रह्मेति सद्भावं प्रापयतीति सत्यो भगवानिति भाष्यात् ।

**तत्सवितुर्वरेण्यमिति** । गुणैकत्वात्तत् । औणादिकस्तनोतेर्डप्रत्ययः। योग्यतया गुणैरिति सम्बध्यते । सवितुः जगत्प्रसवितुः । षूङ् प्राणिप्रसव इत्यस्मात् तृच् । वरेण्यं वरणीयं भजनीयम् । वृञ् एण्य इति वृधातोरेण्यप्रत्ययः । गुणोन्नतेर्हेतोर्वरेण्यमिति । भर्गः । भा दीप्तौ रमु क्रीडायां गम्लृ गतौ इति धातुसमुदायात् उणादयो बहुलमित्यसुन्प्रत्ययः । अदिभूभ्यां डुतच् इत्यत्र यथा प्रत्ययसन्नियोगेन

भूधातोर्ह्रस्वस्तथा रमेर्गमेश्च टिलोपः । धीमहि ध्यायेम । तदुक्तं ऋग्भाष्ये । गुणैस्ततः प्रसविता वरणीयो गुणोन्नतेः । भारतिज्ञान-रूपत्वाद्भर्गो ध्येयोऽखिलैर्जनैरपि । प्रेरकोऽशेषबुद्धीनां स गायत्र्यर्थ ईरित इति ।। **ओमाप इति** । आपो ज्योतिषां तेजसां रसः सार-भूतमात्रमेवोच्यत इति भाष्ये । अमृतं ब्रह्म भूर्भुवस्स्वरोमिति नित्यमुक्तं गुणपूर्णस्य स्फूर्तिरूपमुत्तमैश्वर्यानन्तसुखरूपमविनाशि प्रणव-व्याहृतिप्रतिपाद्यं ब्रह्मेत्यर्थः । तथा च ॐ भूरित्यादिभूर्भुवःस्वरित्ये-तद्विशिष्टवाक्ययोजना । योऽनन्तानवद्यकल्याणानन्दादिगुणोतत्वादिभि-र्निमित्तैरीशो नाम परब्रह्म विष्णुः परमात्मा स्फूर्तिरूपत्वपूर्णत्वप्रत्यभि-व्यक्त्यादिना भूर्नामको भूगतोऽनिरुद्धात्मा । यश्च रक्षको महैश्वर्य-भूरिवीर्यत्वसर्वोत्पादकत्वादिभिर्भुवर्नामको भूलोकं गतः प्रद्युम्नात्मा । यश्च गत्यादिमान् सुबलरूपत्वानन्तसुखत्वसुखरूपत्वादिभिः सुवराख्यः सुवर्गतः सङ्कर्षणात्मा । यस्तु प्रीतो महनीयत्वोक्तोत्सवतेजो-रूपत्वादिभिर्महश्शब्दवाच्यो महर्लोकगतो वासुदेवात्मा । यश्च तृप्तिमान् जनयितृत्वजनित्वादिना तन्नामा जनोलोकगतो नारायणः । यस्तु सर्ववित्तृशत्रुसम्पादकत्वालोचनज्ञानरूपत्वादिना तपोनामा तपोलोकगतो हरिः । यश्च सद्गुणैः साधुप्राप्यत्वसद्भावप्रापकत्वसद्गतत्वादिभिः सत्यनामा सत्यलोकस्थः । यो भर्गो भारतिज्ञानरूपो भरणगमनशीलो नोऽस्माकमशेषजीवानां च धियो बुद्धीः प्रचोदयात् प्रेरयेत् तस्य सवितृदेवस्य जगत्प्रसवादिकर्तुर्देवस्य क्रीडादिगुणविशिष्टस्य नारायणस्य तत् गुणैस्ततं व्याप्तं तस्मादेव वरेण्यं वरणीयं भजनीयम् भर्गो भारतिज्ञानरूपम् दीप्तिक्रीडाज्ञानवत् भगवद्रूपम् । आपो ज्योतिषां तदुपलक्षितपञ्चमहाभूतानामविनाशि च स्फूर्तिरूपत्वादिपूर्वोक्त-

प्रवृत्तिनिमित्तैर्भूर्भुवस्स्वरिति विशिष्टव्याहृतिप्रतिपाद्यं हरिरूपं ॐ गुणपूर्णं ब्रह्म धीमहि ध्यायेम ।।

**सा.आ.–** ओजोऽसि बलहेतुभूताष्टमधातुरूपाऽसि शक्तिरसीति वा । सहोऽसीत्यस्य विवरणं बलमसीति । शत्रूणामभिभवशक्तिरसीति माधवः । भ्राजोऽसि दीप्तिरूपाऽसि । देवानां धामासि तेषां नाम चासि । देवानां धाम तेजो यदस्ति तन्नामासि तदेव तव नामेत्यर्थ इति माधवः। विश्वमसि विश्वायुरित्यनयोर्विवरणं सर्वमसि सर्वायुरिति । अभिभूरसीत्यनुषङ्गः । सर्वाभिभवकर्त्र्यसीत्यर्थः । ॐ असीत्यनुषङ्गः। प्रणवरूपासीत्यर्थः । देवताछन्दऋषीणामावाहनमन्त्रमाह ।। **गायत्रीमित्यादिना** । अर्थः स्पष्टः । इदानीं छन्द आदीनाह ।। **गायत्र्या इत्यादिना** । तत्सवितुरिति मन्त्रस्य गायत्रीति नाम । अग्निर्मुखमित्याद्यभिमानिदेवताभिप्रायम् । पृथिवी योनिः उपस्थानम् । समुद्रो मूत्रमित्यपि बोध्यम् । प्राणापानव्यानोदानसमाना । जसो डादेशः । एते सप्राणाः प्राणसदृशा इत्यर्थः । प्रसिद्धप्राणादय एव गायत्र्याः प्राणादय इत्यर्थः । प्राणादिभिरेव सप्राण इति वा । साङ्ख्यायनसगोत्रा साङ्ख्यायनगोत्रवती । गायत्री चतुर्विंशत्यक्षरा इदं मन्त्राभिप्रायम् । णकारं पृथगक्षरं गृहीत्वेदम् । देवीभागवते चतुर्विंशत्यक्षराणां देवताकथनावसरे णकारस्य पृथग्देवताकथनात् । विष्णवे नम इति मन्त्रस्यैवमेव षडक्षरत्वस्याभियुक्तैरुपपादनाच्च । त्रयः पादा अस्या इति त्रिपदा । सङ्ख्यासुपूर्वस्येति लोपः टाबृचीति टाप् । पादः पदिति पदादेशः । बृहदारण्याद्युक्तश्चतुर्थः पादः पुरश्चरणादावेव प्रत्यहमित्युक्तं भवति । पञ्चशीर्षाः पञ्चशिरस्का । इदमभिमानिदेवताभिप्रायकम् । उपनयने विनियोगः । सव्याहृतिकायाः सशिरस्काया गायत्र्या इति

शेषः । उपनयने प्राणापानयोः परस्परसमीपनयने । कुम्भकप्रधाने प्राणायामे इति फलितोऽर्थः । भूरादयः सत्यन्ताः सप्तव्याहृतयः सप्तलोकप्रतिपादकाः । गायत्रीमन्त्रस्यायमर्थः । यः सविता नोऽस्माकं धियो बुद्धीः प्रचोदयात् सत्कर्मणि ब्रह्मविचारे प्रेरयेत् । तत्सवितुः । कर्मधारयः । तस्य सवितुर्देवस्य । सुवति प्रेरयति सर्वं सूते जनयति वा सवितृमण्डलगः सवितृनामा नारायणः परमेश्वरः । अथ य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रु-र्हिरण्यकेश आप्रणखात्सर्व एव सुवर्णस्तस्य यथा कप्यासं पुण्डरीक-मेवमक्षिणी तस्योदिनाम स एष सर्वेभ्यः पाप्मभ्य उदित इति छान्दोग्यात् । ध्येयः सदा सवितृमण्डलमध्यवर्ती नारायणः सरसिजासनसन्निविष्ट इति स्मृतेश्च । अयमेव मुख्यो गायत्र्यर्थः । एतदधिष्ठानतया सूर्योऽप्यमुख्यतया गायत्र्यर्थः । वरेण्यं वरणीयं भर्गस्तेजः । धीमहि ध्यायेम । यद्वा तदिति तनोते रूपं भर्ग इत्यस्य विशेषणम् । ॐ तत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृत इति स्मृतेः । य इति श्रवणात्तस्येत्यध्याहार्यम् (इयं योजना पदपाठानु-गुणा) । मैत्रेयीशाखायां तु भर्गो रुद्र इत्युक्तं, तदेत्थं योजना । सवितुः उक्तस्य परमेश्वरस्य यो भर्गाख्योंऽशस्तं धीमहीति । अत्र तमित्यध्याहारः । वरेण्यमिति तमित्यस्य विशेषणम् । गायत्रीशिरस-श्चायमर्थः । ॐ पूर्णम् आप्नोति सर्वमित्यापः ज्योतिः ज्योतीरूपः । रसः श्रेष्ठः । 'रसः सारो परश्चेति सर्वे श्रेष्ठार्थवाचका' इत्यभिधानात् । अमृतं मृतिरहितं ब्रह्म सर्वप्रकारेण वृद्धम् । भूर्भुवस्सुवः तत्तल्लोकव्यापि सर्वमवति रक्षतीति । ॐ आप इत्यादीनि पदानि परब्रह्मप्रतिपादकानि ।। १-६ ।। अ० ३५ ।।

उत्तमे शिखरे जाते भूम्यां पर्वतमूर्धनि ।।
ब्राह्मणेभ्योऽभ्यनुज्ञाता गच्छ देवि यथासुखम् ।।
स्तुतो मया वरदा वेदमाता
प्रचोदयन्ती पवने द्विजाता ।।
आयुः पृथिव्यां द्रविणं ब्रह्मवर्चसं
मह्यं दत्वा प्रजातुं ब्रह्मलोकम् ।। अ० ३६ ।।

**धी.ती.–** अथ गायत्रीविसर्जनमन्त्रमाह ।। **उत्तम इति** ।। पर्वतमूर्धनि पर्वतोपरि तत्रापि उत्तमे शिखरे उच्चे शिखराग्रे जाते उत्पन्ने हे देवि गायत्रि । ब्राह्मणेभ्योऽभ्यनुज्ञाता स्तुता मया वरदा वेदमाता प्रचोदयन्ती पवने द्विजाता आयुः पृथिव्यां द्रविणं ब्रह्मवर्चसं मह्यं दत्वा प्रजातुं ब्रह्मलोकम् । स्तुतोमया पार्वत्या स्तुता । यद्वा मया स्तुता उ एव मया स्तुता वरदा वरप्रदा । वेदमाता वेदानां मातृस्थानीया । द्विजातान् पवने पवित्रीकरणे प्रचोदयति प्रेरयति । मह्यं पृथिव्यामायुर्दीर्घायुष्यं द्रविणं विद्यादानात्मकवित्तं ब्रह्मवर्चसं ब्राह्मतेजः प्रजातुं प्रकृष्टजातित्वं च मह्यं दत्वा यथासुखं यथेष्टं गच्छेत्यर्थः । यद्वा प्रजाते मद्गायत्रीध्यानादिना प्रजातं प्रकर्षेणोत्पन्नं ब्रह्मलोकं ब्रह्मज्ञानवैकुण्ठादिलोकं च मह्यं दत्वा यथासुखं गच्छेति पूर्वेणान्वयः ।।

**सा.आ.–** जपादूर्ध्वं गायत्रीविसर्जनमन्त्रमाह ।। **उत्तम इति** । भूम्यां पर्वतमूर्धनि मेरुपर्वतमूर्धनि उत्तमे शिखरे रत्नसानौ च जातेऽभिव्यक्ते । इदं देवीत्यस्य विशेषणम् । अभ्यनुज्ञाता अनुमोदिता ब्राह्मणैरित्यर्थाल्लब्धम्। ब्राह्मणेभ्यः । यथासुखं स्वस्थानं

गच्छेत्यन्वयः । मया स्तुतः स्तुता वरदा द्विजाता द्विर्जाता । भूम्यां रत्नसानौ च जातत्वात् । यत्तु भूम्यामवस्थितो यः पर्वतस्तस्य मूर्धनीत्यर्थ इत्युक्तं माधवेन । तन्न युक्तम् । भूम्यामिति विशेषणवैय्यर्थ्यात् । एकदेशान्वयापत्तेश्च । द्विजातेत्युत्तरवाक्यानुरोधेन पृथक्तयोर्जाते इत्यत्रान्वयौचित्याच्च । वेदमाता गायत्री पवने पवित्रे कर्मणि प्रचोदयन्ती सती । स्वोपासकानिति शेषः । मह्यमायुः पृथिव्याम् । स्थितमिति शेषः । द्रविणं धनं ब्रह्मवर्चसं च दत्वा ब्रह्मलोकं प्रजातुं प्रयातु । छान्दसत्वात्साधु ।। अ० ३६ ।।

**घृणिस्सूर्य आदित्यो न प्रभावा-**
**त्यक्षरम् । मधु क्षरन्ति तद्रसम् ।।**
**सत्यं वै तद्रसमापो ज्योती रसोऽ-**
**मृतं ब्रह्म भूर्भुवः सुवरोम् ।। अ० ३७ ।।**

धी.ती.– अनावृष्टिसर्वव्याधिपरिहाराय योग्यानां सौराष्टाक्षर-मन्त्रादिकमस्माकं प्रतिभात्वित्याह ।। घृणिरिति । घृणिः घृणामान्सूर्यः सूरिगम्य, आदित्योऽदितेः सुतः । घृणिः सूर्य आदित्य इत्याष्टाक्षरो मन्त्रस्तत्प्रतिपाद्यो भगवान्सूर्यः । तदन्तर्गतमष्टाक्षरशब्दितं नारायणाख्यं ब्रह्म न प्रभावाति न प्रभवति । अयोग्यानां ज्ञानविषयो न भवतीत्यर्थः । तदष्टाक्षरं पदत्रयं मधु, रसं श्रेष्ठं, सूर्याख्यं तदन्तर्गतं च ब्रह्म क्षरन्ति स्रवन्ति । योग्यानां तद्विषयं ज्ञानमुत्पादयन्तीति यावत् । एव वै मधुरिति सूर्यं छन्दोगा आमनन्ति । ओमाप इत्यादि गतम् ।।

सा.आ.– घृणिः सूर्य आदित्य इत्यादित्येषु त्रयोऽत्यक्षरं

अक्षरमतिक्रम्य स्थातुं न प्रभावा न समर्थाः । एकस्यैव योगेन नामभेदे तु न समर्थ इत्यर्थः । अक्षरशब्देन ऋगादि । मधु देवमधु आदित्यं प्रति तद्रसं छान्दोग्ये मधुविद्योक्तं रसं यशस्तेज इन्द्रियं वीर्यमन्नाद्यं न क्षरन्ति गमयन्ति । अक्षरशब्दवाच्या ऋगाद्याः कर्तारः। सत्यं वै तद्रसं सत्यं ब्रह्म तद्वच्छुद्धं यथार्थं वा । रसमेवाह ।। **आप इत्यादिना** । आपस्ता इव शुक्लं यशो ज्योतिस्तेजो रसः श्रेष्ठमिन्द्रिय-ममृतं वीर्यं ब्रह्म पूर्णम् । अन्नाद्यं भूर्भुवस्सुवर्लोकव्यापि । ॐ मह्यमादित्योऽङ्गीकरोतु । तथा च छन्दोगाः समामनन्ति । असौ वा आदित्यो देवमधु ऋच एव मधुकृतः । ता वा एता ऋच एतमृग्वेद-मभ्यतपंस्तस्याभितप्तस्य यशस्तेज इन्द्रियं वीर्यमन्नाद्यं रसोऽजायत तत् व्यक्षरत्तदादित्यमभितोश्रयदित्यादि । ऋग्वेदं ऋग्वेदविहितं कर्म । अभ्यतपन् उत्पादितवन्तः । व्यक्षरत् आदित्यं प्रत्यगच्छदिति छान्दोग्यार्थः । यद्वा एतास्त्रिस्र आदित्यमूर्तयः । रसं श्रेष्ठं तत् ब्रह्म मधु क्षरन्ति उत्पादयन्ति ऋगादिवेदद्वारा प्रकाशयन्ति । सत्यं ब्रह्म आप इत्याद्याप्नोतीत्याद्युक्तदिशा ब्रह्मवाचि । तदेतद्ब्रह्ममेत्वित्युत्तरानु-वाके स्पष्टीभविष्यति । यद्वा तिस्रो मूर्तयस्तद्रसं मधु क्षरन्ति उत्पादयन्ति । तद्रसशब्दार्थमाह ।। **सत्यमिति** । सत्यशब्दार्थमाह ।। **आप इत्यादिना** । आदित्याज्जायते वृष्टिरिति स्मृतेरापः सूर्यात्प्रभवन्ति । ज्योतिः प्रकाशः । रसः ओषधिषु रसोऽमृतं समुद्रे वृष्टिद्वारा सूर्यनिष्पन्नौषधिमन्थनेनामृतनिष्पत्तेः । ब्रह्म वेदो याज्ञवल्क्याय सूर्येण वेददानात् । भूर्भुवस्सुवो वेदत्रयसारभूता व्याहृतयः । ॐ प्रणवश्च । एतत्सर्वं सूर्य उत्पादयतीत्यर्थः

।। अ० ३७ ।।

ब्रह्ममेतु माम् । मधुमेतु माम् । ब्रह्ममेव मधुमेतुमाम् । यास्ते सोम प्रजावत्सोऽभि सो अहम् । दुष्वप्नहन्दुरुष्षह । यास्ते सोम प्राणाꣳस्तान्जुहोमि ।। १ ।।

त्रिसुपर्णमयाचितं ब्राह्मणाय दद्यात् । ब्रह्महत्यां वा एते घ्नन्ति । ये ब्राह्मणास्त्रिसुपर्णं पठन्ति । ते सोमं प्राप्नुवन्ति । आसहस्रात्पङ्क्तिं पुनन्ति । ओम् ।। २ ।। अ० ३८ ।।

धी.ती.– इदानीं त्रिसुपर्णाख्यमन्त्रविशेषांस्तज्ज्ञानपठनयोः फलमाह ।। ब्रह्ममेत्वित्यादिनाऽनुवाकत्रयेण । हे सोम उत्कृष्ट । मा उमा, मा सम्पज्ज्ञानं च तत्सहितोत्कृष्टसम्पज्ज्ञानघन सोमान्तर्यामिन्हरे । ते याः प्रजा ब्रह्माद्या ब्राह्मणा वा । सोमो वै ब्राह्मणानामिति श्रुतेः । अभिमुख्येन तव पुरत इति यावत् । ते सोऽहं वत्सो बालोऽतो ब्रह्मं ब्रह्मसम्बन्धिनं तदधीनसत्ताकं मां न तु ब्रह्माभिन्नम् । यदधीना यस्य सत्ता तत्तदित्येव भण्यते । यथा जीवः परात्मेति यथा राजा जयीत्यपीति वचनात् । यद्वा ब्रह्मं तत्सम्बन्धि ब्रह्मविषयकं ज्ञानं मामेतु । ताः प्रजाः ब्रह्माद्या ब्राह्मणाश्च । रक्षितुमिति शेषः । एतु मां रक्षितुमायात्वित्यर्थः । मधु आनन्दरूपं मामेतु । मध्वित्यानन्द उद्दिष्ट इति स्मृतेः । मुक्तियोग्यानन्दस्वरूपत्वाच्च । ब्रह्ममेव मधु ब्रह्मादीनामानन्दरूपमेव मामेतु रक्षितुमायात्वित्यर्थः । दुरुष्षहेत्येतत्तु योग्यतया दुष्वप्नहेत्यनेन पदार्थैकदेशेऽन्वेति । उभयत्र सस्य षत्वं छान्दसम् । दुरुष्षह दुष्वप्नहन् । हे सोम याः प्रियप्राणाः । लिङ्गव्यत्ययश्छान्दसः । ये प्राणास्त्वदधीना मनआदीन्द्रियाणि सन्ति । ता इत्यत्राव्यवहिता-

श्छन्दसीति शास्त्रात्पूर्वस्य या इत्यस्यास्ता इत्यनेन सम्बन्धः । तानीत्यर्थः । तान्प्राणान् जुहोमि त्वद्विषयान्करोमि । ये त्रिसुपर्णं ब्रह्ममेतुमामित्यारभ्य जुहोमीत्यन्तं मन्त्रमयाचितमत्यर्थितं ब्राह्मणाय दद्यात् । तदुद्धाराय दद्युरुपादिशेत् । ये त उपदेष्टारो ब्रह्महत्यां मानसिकवाचनिकब्रह्महत्यामेव घ्नन्ति वा नाशयन्त्येव । ये ब्राह्मणा उपदिष्टं त्रिसुपर्णं मन्त्रं वरिष्ठं मन्यमानाः पठन्ति ते सोमपानफलं सोमलोकं वा प्राप्नुवन्ति । ते चान्द्रमसमेव लोकमपि यान्तीत्याथर्वणोक्तेः । आसहस्रात् सहस्रपतितानभिव्याप्य पङ्क्तिं पुनन्ति पवित्रां कुर्वन्ति । ते पङ्क्तिपावना इति यावत् ।।

**सा.आ.**– ब्रह्महत्यादिपापनिवर्तकत्रिसुपर्णमन्त्रानाह ।। **ब्रह्ममिति** । अदन्तत्वं छान्दसम् । ब्रह्मं ब्रह्म मामेतु प्राप्नोतु । मधुं मधु । प्रथमाया आदेशश्छान्दसः । मामेतु । पृथङ्निर्देशेन प्राप्तां भेदशङ्कां निराकरोति । **ब्रह्ममेवेति** । हे सोम परमेश्वर । ते या प्रजास्ता अभिलक्ष्य सोऽहं वत्सोऽतो दुःस्वप्नहन् दुरुः मया दुरुक्तं षह सहस्व । हे सोम ते तव । षष्ठ्यर्थो जन्यजनकभावः । या ये प्राणा इन्द्रियाणि तान्प्राणांस्त्वयि जुहोमि विषयेभ्यः परावर्त्य त्वयि योजयामीत्यर्थः । उक्तस्य त्रिसुपर्णमन्त्रस्य ब्राह्मणरूपेण वाक्येन माहात्म्यं दर्शयति । **त्रिसुपर्णमिति** । इदं प्रथमं त्रिसुपर्णं मन्त्रमयाचितमेव ब्राह्मणाय दद्यात् । त्रिसुपर्णशब्दोऽत्र केवलरूढः । त्रयः सुपर्णा ब्रह्ममन्त्रा आद्या यत्रेति बहुव्रीहिणा योगरूढ इत्यन्ये । ब्राह्मणशब्दो ब्रह्मणतीति विग्रहेण ब्रह्मनिष्ठपर इत्यन्ये । ब्राह्मणत्वजातिपर इत्यपरे । ब्रह्महत्यां वा इति । वै इति छेदः । ब्रह्महत्या मानसी वाचिकी वा ग्राह्या । तदुपद्रष्टृत्वरूपा वा । अन्यथा

गुरुतरप्रायश्चित्तोपदेशवैय्यर्थ्यप्रसङ्गात् । सोमं प्राप्नुवन्ति परमेश्वरं प्राप्नुवन्ति । सोमयागमिति माधवेनोक्तं तु न युक्तम् । सोमशब्देन परमेश्वरस्यैव प्रक्रान्तत्वात् । यद्वा सोमं सोमपानफलं प्राप्नुवन्तीत्यर्थः । एवं द्वितीयतृतीयत्रिसुपर्णयोरपि बोध्यम् । आसहस्रात् सहस्रमभिव्याप्य । ॐ मित्यन्ते ब्रह्मस्मरणम् ।। अ० ३८ ।।

ब्रह्ममेधया । मधुमेधया । ब्रह्ममेव मधुमेधया । अद्यानो देव सवितः प्रजावत्सावीः सौभगम् । परा दुष्वप्नियꣳ सुव । विश्वानि देव सवितर्दुरितानि परा सुव । यद्भद्रं तन्म आसुव ।। १ ।।

मधुवाता ऋतायते मधु क्षरन्ति सिन्धवः । माध्वीर्नः सन्त्वोषधीः । मधु नक्तमुतोषसि मधुमत्पार्थिवꣳ रजः ।। २ ।।

मधु द्यौरस्तु नः पिता । मधुमान्नो वनस्पतिर्मधुमाꣳ अस्तु सूर्यः । माध्वीर्गावो भवन्तु नः ।। ३ ।।

य इमं त्रिसुपर्णमयाचितं ब्राह्मणाय दद्यात् । भ्रूणहत्यां वा एते घ्नन्ति । ये ब्राह्मणास्त्रिसुपर्णं पठन्ति । ते सोमं प्राप्नुवन्ति । आसहस्रात् पङ्क्तिं पुनन्ति ।। २-४ ।।अ०३९।।

धी.ती.– हे सवितर्देवः प्राणिप्रसवादिकर्तृत्वेन सवितृनामक क्रीडादिगुणविशिष्टसवित्रन्तर्गत हरे । नोऽस्मदीयाः प्रजाः पुत्रशिष्याद्या ब्रह्ममेधया वेदार्थज्ञानेन मे मधुमेधया मधुशब्दितानन्दरूपभगवज्ज्ञानेन च ब्रह्ममेव मधुमेधया मदीयब्रह्मसम्बन्धिमधुमेधया च आवीः रक्षां

कुरु । नोऽस्माकं तेषां चाद्य सौभगं देहीति शेषः । दुष्वप्नियं दुःस्वप्नसम्बन्धि तादृशजन्यमनिष्टं परा सुव पराकुरु । व्यवहिता-श्छन्दसीति सूत्रात् । परा इत्यस्य सुवेत्यनेन सम्बन्धः । हे देव सवितर्नो विश्वानि समस्तानि दुरितानि दुष्कृतानि परासुव । यत् मे भद्रं मङ्गलं क्षेमकरं वा तदासुव तदुत्पादयेत्यर्थः । हे देव तव ऋताय यथार्थमानाय ताः प्रधानवायुना सह पञ्चाशन्मरुतः सिन्धवः समुद्रा नद्यश्च तदभिज्ञानिनो देवा मधु मधुरसोपेतं वचनं क्षरन्ति स्रवन्ति । उपदिशन्तीति यावत् । ओषधीः ओषध्यः फलपाकान्ता व्रीह्यादयस्तदभिमानिनो देवा मधुरसोपेता मधुरवचनाः सन्त्विति । नक्तं च रात्रौ उषसि उषःकाले च पार्थिवं रजो मधुमत् द्यौर्द्युलोकाभिमानिनी देवता च मधु मधुरवचनाऽस्तु । नः पिता रक्षको भगवान् मधु अस्तु मधुरवचनो भवतु । नो वनस्पतिः पुष्पं विना फली वृक्षस्तदभिमानी देवश्चन्द्रो मधुमान् । सूर्यश्च मधुर-वचनोऽस्तु । गावो वेदवाचो माध्वीः मधुरवचना भवन्तु । मधु-शब्दितब्रह्मज्ञानाय भवन्त्विति यावत् । **य इमं त्रिसुपर्णमिति** । भ्रूणहत्यां बालब्रह्मचारिहत्यां गर्भहत्यां वा एते घ्नन्ति । 'भ्रूणोऽर्भके स्त्रैणगर्भे' इति कोशात् । य इमं मधुमेधयेत्याद्येकं द्वितीयं त्रिसुपर्णाख्यं मन्त्रम् । अयाचितमित्यादि स्पष्टम् । ओमित्येतदनुज्ञाक्षरम् ।।

**सा.आ.–** द्वितीयत्रिसुपर्णमन्त्रानाह । **ब्रह्ममिति** ।। ब्रह्मं ब्रह्म । एधया । दीर्घश्छान्दसः स्वार्थे णिच् । एधतामित्यर्थः । मयीति शेषः । एधयेत्यस्य वर्धयस्वेत्यर्थो वा । ब्रह्मस्वरूपप्रकाशं कुर्विति वेदपुरुष प्रार्थना । ब्रह्म मदीयमेधया लभ्यतामिति माधवः ।

अस्मिंस्त्रिसुपर्णे सवितृनाम्नः परमेश्वरस्य प्रार्थना । हे देव सवितरद्य नोऽस्मभ्यं प्रजावत् प्रजायुक्तं सौभगं सावीः असावीः दत्तवान् । बहुलं छन्दस्यमाङ्योगेऽपीत्यडभावः । दुष्वप्नियं स्वप्नसूचितमरिष्टं परासुव निराकुरु । न केवलं दुःस्वप्नसूचितं किन्तु विश्वानि दुरितानि परासुव यद्भद्रं तन्म आसुव । स्पष्टोऽर्थः । हे सवितः ते ऋताय तुष्टवे वाताः मधु । वान्तीति शेषः । सिन्धवो नद्यः । यद्वा ऋतिः सौत्रो धातुर्गतौ । ऋतेरीयङ् । छान्दस ईकारस्याकरः । उभयत्र विधौ लेट् । माध्वीः मधुयुक्ता नक्तं रात्रौ उत उषसि दिवसेऽपि नो मध्वस्तु सुखपरो मधुशब्दः । पिता द्यौर्नो मध्वस्तु । द्यौः पिता पृथिवी मातेति मन्त्रवर्णात् । वनस्पतिः आम्रपनसादिः । ओषध्यः फलपाकान्ता व्रीहियवादय इति भेदः । यः त्रिसुपर्णविद्वान् । स इति शेषः। इमं द्वितीयम् । भ्रूणहत्यामिति । ब्राह्मणगर्भस्य राजगर्भस्य वा वधो भ्रूणहत्येति माधवः । अत्र मूलं मृग्यम् ।। १-४ ।।अ०३९।।

**ब्रह्म मेध वा । मधु मेध वा । ब्रह्ममेव मधु मेध वा। ब्रह्मा देवानां पदवीः कवीनामृषिर्विप्राणां महिषो मृगाणाम् । श्येनो गृध्राणाꣳ स्वधितिर्वनानाꣳ सोमः पवित्रमत्येति रेभन् । हꣳ सः शुचिषद्वसुरन्तरिक्षसद्धोता वेसिषदतिथिर्दुरोणसत् । नृषद्वरसदृतसव्द्योमसदब्जा गोजा ऋतजा अद्रिजा ऋतं बृहत् ।। १ ।।**

**धी.ती.–** अथ तृतीयत्रिसुपर्णाख्यमन्त्रमाह ।। ब्रह्ममेध वेत्यादिना । मेधो यज्ञः सोऽस्यास्तीति ब्रह्म मेधवत् । पूर्वसवर्णश्छान्दसः । यज्ञादिसाध्यविविदिषापूर्वकत्वात् ब्रह्मज्ञानस्य ब्रह्म मेधवदुच्यत इत्येके ।

वस्तुतस्तु मुख्यतो यज्ञफलभोक्तृत्वान्मेधवत् । ब्रह्म मधुमेधवत् परमानन्दजनकमाधुर्योपेतयज्ञफलभोक्ता ब्रह्मेत्यर्थः । ब्रह्ममेव परब्रह्ममेव मधुमेध वा तु स्वादु यज्ञफलभोक्तुः । तयोरन्यः पिप्पलं स्वाद्वत्तीत्याथर्वणोक्तेः । ब्रह्मा देवानामिति भगवतः सर्वोत्तमत्वं सदृष्टान्तमाह ।। **ब्रह्मेति** । देवानां यथा चतुर्मुख उत्तमः कवीनां कवयतां पदवीः पदवित् व्याकरणशास्त्राभिज्ञो यथोत्कृष्टः । विप्राणामृषिः ज्ञानी यथोत्कृष्टः । मृगाणां महिषो यथोत्कृष्टः । गृध्राणां श्येनो यथोत्कृष्टः । वनानां स्वधितिः यज्ञसाधनीभूतः शस्त्राकारः काष्ठविशेषो यथा । सोमः उभयोत्कृष्टज्ञानेन लक्ष्म्या वा सहितः परमात्मा । पवित्रं लोकपावनं यद्वस्तु तत्सर्वमत्येति अतिक्रम्य वर्तते । हंसः शुचिषदिति ऋक् अणोरणीयानित्यनुवाके व्याख्याता । हंसः सूर्यः । हंसः सूर्ये खगे विष्णाविति कोशात् । विष्णुर्वा शुचिषत् शुचिं सादयति प्रापयतीति शुचिषत् । शुचिशब्दोपपदात्सदेरन्तर्णीतण्यर्थात् क्विप् । शुद्धिप्रापक इत्यर्थः । वातातपाभ्यां शुद्ध्यतीति । यः स्मरेत्पुण्डरीकाक्षं स बाह्याभ्यन्तरः शुचिरिति वचनात् । वसुः सर्वत्र निवसात् । अन्तरिक्षसद्धोता वेदिषदित्यादि गतम् ।।

**सा.आ.–** तृतीयत्रिसुपर्णमन्त्रानाह ।। **ब्रह्मेति** । एध एधतां अव मां रक्षतु च । शकन्ध्वादेराकृतिगणत्वात्पररूपम् । मेधो यज्ञोऽस्यास्तीति मेधवदिति माधवः । सुपर्णस्य ब्रह्मणः श्रैष्ठ्यं वक्तुं तज्जातीयेषु प्रथमश्रेष्ठानाह ।। **ब्रह्मेति** । व्याख्यातैषा ऋक् । एभ्यः सर्वेभ्यः श्रेष्ठो हंसरूपी (नामा) परमेश्वर इत्याह ।। **हंस इति** । एभ्यः सर्वेभ्योऽपि बृहदित्यर्थः । एषाऽपि ऋक् पूर्वं व्याख्याता

।। १ ।।

ऋचे त्वा ऋ (रु) चेत्वा समित्स्रवन्ति सरितो न धेनाः । अन्तर्हृदा मनसा पूयमानाः । घृतस्य धारा अभिचाकशीमि ।। २ ।।

हिरण्ययो वेतसो मध्य आसाम् । तस्मिन्त्सुपर्णो मधुकृत्कुलायी भजन्नास्ते मधुदेवताभ्यः । तस्यासते हरयः सप्ततीरे स्वधां दुहाना अमृतस्य धाराम् ।। ३ ।।

य इदं त्रिसुपर्णमयाचितं ब्राह्मणाय दद्यात् । वीरहत्यां वा एते घ्नन्ति । ये ब्राह्मणास्त्रिसुपर्णं पठन्ति । ते सोमं प्राप्नुवन्ति । आसहस्रात् पङ्क्तिं पुनन्ति ओम् ।। ४ ।।

अ० ४० ।।

धी.ती.– ऋचे त्वेति सार्धर्चा भगवतो घृतस्य धारां प्रकाशयामीत्याह । **ऋचे त्वेत्यादि** । ऋचे हे ब्रह्मन् । त्वा त्वां प्रति घृतस्य धाराः । अभिचाकशीमिति सम्बन्धः । ऋचे ऋग्वेदाय तत्प्राप्तवते रुते तव सुरुच्यर्थो धेना धेनवो वेदवाचो वा । सरितो न नद्य इव । समित् समिदुपलक्षितक्षीरघृतादिहवींषि स्रवन्ति । कथम्भूता वेदवाचो धेनवोऽत आह ।। **अन्तर्हृदेति** । अन्तर्गतभक्तिमनसा पूयमानाः पवित्रीकुर्वाणा इत्यर्थः । **अहं ते घृतस्य धारा अभिचाकशीमि** अभितो वह्नेः सर्वत्र चाकशीमि प्रकाशयामि । वसोर्धारां करोमीति यावत् ।। **हिरण्यय इति** । आसां सरितां मध्ये हिरण्ययो हिरण्मयो वेतसस्तृणविशेषो वृक्षविशेषो वा वर्तते । तस्मिन्कुलायी नीडवान् । पक्षाश्रयवानिति यावत् । कुलायो नीडमस्त्रियामिति कोशात् । सुपर्णो गरुडो देवताभ्यः सकाशान्मधु

अमृतं भजन् देवतायजनेनामृतं लब्ध्वाऽऽस्ते । यद्वा सुपर्णः पक्षिरूपो भगवान् । द्वा सुपर्णेत्यादौ भगवतः पक्षिरूपत्वाभिधानात् । देवता मधुकृत् अमृतकार्यमृतं भजन् मोहिनीरूपेण विभागं कुर्वन् तस्य समुद्रस्य तीरे तट अस्त इत्यर्थः । तस्याः प्रकृतनद्यास्तीरे सप्तहरयो विष्णुयमाद्याः सप्त । अमृतस्य धारां तत्सदृशीं स्वधां पितृदेवता-योग्यानां दुहाना दोहमाना आसते वर्तन्त इत्यर्थः । 'यमानिलेन्द्र-चन्द्रार्कविष्णुसिंहांशुवाचिष्वि'ति कोशात् । य इदमित्यादि गतम् । वीरहत्यां पुत्रस्वामिराजादिहत्यां घ्नन्ति परिहरन्ति ॥

**सा.आ.–** ऋचे त्वा रुचे त्वा । ऋच धातो रुचधातोश्च इक्-कृष्यादिभ्य इत्यौणादिकसूत्रेण इक्प्रत्ययः । सम्बोधनद्वित्वाद्युष्मच्छब्द-द्वयम् । परमेश्वरस्य सम्बोधनद्वयम् । हे ऋचे हे स्तुत्य हे रुचे हे दीप्तिमन् । त्वां प्रति घृतस्य धारा ज्ञानधाराः संस्रवन्ति । इत एव धेना जलपूर्णाः सरितो नद्यो न इव अन्तर्हृदा हृदयान्तःस्थेन मनसा पूयमानाः संशोध्यमानाः । इदं धारा इत्यस्य विशेषणम् । ऋग्भि (र्वेदै) रुत्पाद्यमाना विचारप्रवणेन मनसा संशोध्यमाना घृतस्य धारा ज्ञानधारास्त्वां प्रति स्रवन्ति । तासां धाराणां मध्ये हिरण्ययो हिरण्मयो वेतसो जलमध्यस्थो वा । हिरण्यय इति जीवस्य विशेषणम् । तेजोरूपत्वात् । तस्मिन्वेतसे सुपर्णो भ्रमरसदृशः परमेश्वरो मधुकृत् मधुसदृशसुखसाधनकृत् सुखकृद्वा । कुलायी नीडवान् । नीडं च हृदयपुण्डरीकम् । तस्मिन्नित्यस्य मधुकृदित्यने-नान्वयः । देवताभ्यो मधु भजन् भाजयन्विभजन्वाऽऽस्ते । कुलाय आस्त इत्यर्थः । तस्य कुलायस्य सुपर्णस्य वेतसस्य वा तीरे समीपे हरयो विषयान् हरन्ति विषयैर्ह्रियन्ते वा हरय इन्द्रियाणि सप्त । द्वे

चक्षुषी द्वे श्रोत्रे द्वे नासिके मुखं चेति । सप्त वै शीर्षण्याः प्राणा इति श्रुतेः । मनोबुद्धिभ्यां सह पञ्च ज्ञानेन्द्रियाणि वा । स्वधां सुखकारिणीं अमृतस्य तत्सदृशस्य ज्ञानस्य धारां दुहानाः कुर्वाणा आसते । यद्वा पूयमाना योगाभ्यासेन संशोध्यमाना घृतस्य दीप्तिमतो नाडीसहस्रस्य धाराः, अन्तः परमेश्वरं हरति विषयीकरोतीत्यन्तर्हृत् । एवंविधेन मनसा सह त्वां प्रति संस्रवन्ति । अहं तु तत्र केवलं चाकशीमि । आसां मध्ये हिरण्ययो वेतसस्तत्सदृशः सुषुम्नानाडी । तस्मिन् तत्संलग्नपुण्डरीके देवताभ्यः पञ्चमहाभूतेभ्यः । हन्ताहमिमास्तिस्रो देवता इति छान्दोग्ये तत्र देवताशब्दप्रयोगात् । मधु सारं भजन् गृह्णन्मधुकृत् । जीवस्य सुखरूपमधुकृत् सुपर्णः परमेश्वर आस्ते । स्वधां जलसदृशीममृतस्य तत्सदृशस्य सुखस्य धाराम् । शिष्टं पूर्ववत् । सुपर्णशब्देन न जीवः । हंस इति पूर्वस्यामृचि ब्रह्मणः प्रकृतत्वात् । एतत्पठनस्य वीरहत्यानिवृत्तिहेतुत्वाच्च । जीवपरत्वे तदसम्भवात् । य एवं विद्वान् स इति शेषः । वीरहत्यां यथा भूरिश्रवसः सात्यकिकृतहननम् । युद्धे सशस्त्रस्य योद्धुं पुरतः समागतस्य हननं तु न वीरहत्या । वेदशास्त्रतदनुष्ठानपरो ब्राह्मणोऽभिषिक्तो राजा वा वीर इति माधवः । तन्निर्मूलम् । यदपि ब्रह्मभ्रूणवीरहननेषूत्तरमधिकमिति तदपि निर्मूलम् । बव्हृचानां तु चतुष्कपर्दा इत्यारभ्य सुपर्णं विप्रा इत्येतदन्तं त्रिसुपर्णं केवलयोगेनैव सुपर्णशब्दत्रयघटितत्वात् । ॐमित्येतद्ब्रह्मस्मरणम् ।।२-४।।अ०४०।।

**मेधा देवी जुषमाणा न आगा-**
**द्विश्वाची भद्रा सुमनस्यमाना ।।**
**त्वया जुष्टा नुदमाना दुरुक्तान्**
**बृहद्वदेम विदथे सुवीराः ।। १ ।।**

**त्वया जुष्ट ऋषिर्भवति देवि**
**त्वया ब्रह्मागतश्रीरुत त्वया ।।**
**त्वया जुष्टश्चित्रं विन्दते वसु**
**सा नो जुषस्व द्रविणो न मेधे ।। २ ।।अ०४१।।**

**धी.ती.**– इतः परं मेधाप्रार्थनारूपान्मन्त्रानाह ।। **मेधेति** । उपदिष्टब्रह्मज्ञानं मेधावत्स्वैव प्रतिष्ठितं भवतीति मेधादेवीमर्थयते । विश्वाची विश्वम् आ सम्यक् चिनोति विदधतीति विश्वाची । यद्वा विश्वमश्नुत्यवगच्छतीति विश्वाची । अत एव भद्रा मङ्गलप्रदा । मेधा-देवीग्रन्थे तदर्थयोर्धारणाशक्तिमती धीर्मेधा तदभिमानिनी देवी धीः सरस्वती च जुषमाणा प्रीयमाणा सुमनस्यमाना सौमनस्यशालिनी सती नोऽस्मान्प्रत्यागात् आगच्छत् । हे देवी त्वया जुष्टा अनुगृहीता अयं दुरुक्तान् वेदतात्पर्यानभिज्ञोक्तवेदार्थान् । नुदमानास्तिरस्कुर्वाणा विदथे वेदतात्पर्यज्ञाने मानसयज्ञे वा सुवीराः समर्थास्सन्तो बृहत् गुणपूर्णं नारायणाख्यं ब्रह्म वदेम कथयामः । अथ तत्रैवार्थे द्वितीया ऋक् ।। **त्वयेति** । हे मेधादेवि मेधाभिमानिनि सरस्वति । त्वया जुष्टोऽनुगृहीतो त्वत्प्रियो वा ऋषिः अतीतानागतज्ञानी भवति । तथा त्वया जुष्टो ब्रह्मा चतुर्मुख आगतश्रीः प्राप्तसम्पच्च भवति । अत एव त्वया जुष्टः पुरुषश्चित्रं गावो हिरण्यधान्यादि विविधं वसु विन्दते लभते । सा तादृशी मेधे त्वं द्रविणः अनुद्रविणोऽनुसृतानिति यावत् । नोऽस्मान् जुषस्व अनुगृहाण । द्रविणेनेति पाठे धनेन जुषस्व । अन्तर्णीतणिच् । प्रीणयस्वेत्यर्थः ।।

**सा.आ.**– इदानीं वेदाभिमानिदेवतामन्त्रमाह ।। **मेधेति** । सूक्ष्म-बह्वर्थस्य झडिति ग्रहणशक्तिर्मेधा । धारणाशक्तिर्मेधेति माधवेनोक्तं तु

न युक्तम् । धारणामन्त्रस्योक्तत्वात् । मन्त्रलिङ्गस्य ग्रहण एवानुगुण्याच्च । जुषमाणा अनुगृह्णानाः प्रीयमाणा वा नोऽस्मान् आगात् आयातु । लेट् । देव्या विशेषणानि विश्वाचीत्यादीनि । विश्वमश्वतीति विश्वाची सर्वविषयिणी । इमानि विशेषणान्यभिमानि-देवताभिमन्ययोर्यथासम्भवं योज्यानि । भद्रा मङ्गलरूपा सुष्ठु मनांसि निवासार्थमिच्छन्ती । ताच्छील्ये चानश् । त्वया जुष्टा अनुगृहीता दुरुक्तान् वेदविरुद्धानि शास्त्राणि नुदमानाः निराकुर्वाणा अत एव विदथे वादयज्ञे सुवीराः सन्तः । बृहत् निखिलधर्मोपबृंहितं परमेश्वरं वदेम वादकथायां प्रतिपादयेम । सर्वस्याधिपतिः सत्यसङ्कल्पः । यः सर्वज्ञः स हि सर्वस्य कर्ता । सर्वधर्मोपपत्तेश्चेत्यादिश्रुतिसूत्रोपन्यासे-नेत्यर्थाल्लब्धम् । त्वया ब्रह्मा । ऋत्विग्भवतीत्यनुषङ्गः । गतश्रीः प्राप्तश्रीः । अस्य जन इति शेषः । हे मेधे । सा त्वं नोऽस्मा-न्द्रविणोन द्रविणेन सह । यतो मे द्रविणं नेति वा । छान्दसः ओकारः ।। १-२ ।। अ० ४१ ।।

**मेधां म इन्द्रो ददातु मेधां देवी सरस्वती ।**
**मेधां मे अश्विनावुभावाधत्तां पुष्करस्रजा ।। १ ।।**

**अप्सरासु च या मेधा गन्धर्वेषु च यन्मनः ।।**
**देवी(वीं) मेधा सरस्वती सा मां मेधा**
**सुरभिर्जुषताꣳ स्वाहा ।। २ ।। अ० ४२ ।।**

**धी.ती.–** मेधाप्रदानिन्द्रादिशब्दितभगवन्मूर्तिविशेषानर्थयते ।। **मेधामिति** । इन्द्रः परमैश्वर्यशाली इन्द्रगतो हरिः मे मेधां धारणावर्ती धियं ददातु दिशतु । सरस्वती सरस्वतीशब्दवाच्या सरस्वत्यन्तर्गता

भगवन् मूर्तिश्चाश्विनौ आशुगमनशीलत्वादश्विनाविति शब्दवाच्यौ भगवन्मूर्तिविशेषौ तदन्तर्गतौ पुष्करस्रजौ कमलमालिनावश्विनौ देवौ च मे मेधामाधत्तां धारणपोषणादिकं कुरुताम् । आङ्पूर्वकस्य दध धारण इति धातोर्लोडात्मनेपदम् । पुनः प्रार्थनारूपमन्त्रान्तरमाह ।। **अप्सरास्विति** । अप्सरासु उर्वशीप्रमुखाप्सरःस्त्रीषु मेधा भगवद्विषयिणी धारणावर्तीधीः । यत्तु गन्धर्वेषु तुम्बुरप्रभृतिषु देवगायकेषु मनो भगवद्विषयकमवबोधनम् । या च देवेन्द्रादिदेवसम्बन्धिनी मेधा सरस्वती मेधाभिमानिनी सरस्वती सा मेधा मया स्वाहा सुहुना होमेन सुष्ठु पूजितेत्यर्थः । सुरभिः सुगन्धा कामधेनुरूपा वा मां जुषतां सेवताम् । दैवी मेधामनुष्याणामिति पाठे मनुष्येष्विति विभक्तिविपरिणामेन मनुष्येषु वेदशास्त्रवित्सु या मेधाऽस्ति साऽपि मे जुषतामित्यन्वयः ।।

**सा.आ.–** पुष्करस्रजा पद्ममालायुक्तौ । अप्सरासु अप्सरस्सु या मेधा तां दैवीं मेधां मेधा सरस्वती मे ददात्वित्यनुषङ्गेणान्वयः । सा मेधा सुरभिः कामदुघा तत्सदृशा मेधादेवी । उपमानोत्तरपदोऽयं समासः । मां जुषतामनुगृह्णातु । स्वाहेत्यनेनास्य होममन्त्रत्वं सूच्यते । यत्तु ब्रह्मेत्यस्य हिरण्यगर्भ इत्यर्थः । दैवीमित्यस्य मेधेत्यनेनोत्तरेण सामानाधिकरण्यमित्युक्तं माधवेन । तन्न । सरस्वत्या ब्रह्मपत्नीत्वेन बुद्धेरात्मा महान्पर इति श्रुतिबलेन च हिरण्यगर्भानुग्राह्यत्वेन तदनुग्राहकत्वायोगात् । मेधाभिमानिनी च सरस्वतीति तु सरस्वतीपदाभ्यासादेव स्पष्टम् । ब्रह्मा ऋत्विक् सर्वतन्त्रज्ञोऽपेक्षित इति देव्यनुग्राहापेक्षा बोध्या । दैवीमिति द्वितीयान्तस्योक्तरीत्यान्वयसम्भवे प्रथमया विपरिणामे मानाभावा-च्चेत्येषा दिक् ।। १-२ ।। अ० ४२ ।।

**आ मां मेधा सुरभिर्विश्वरूपा**
**हिरण्यवर्णा जगती जगम्या ।।**
**ऊर्जस्वती पयसा पिन्वमाना**
**सा मां मेधा सुप्रतीका जुषन्ताम् ।। अ० ४३ ।।**

**धी.ती.**– पुनरपि मेधार्थं मन्त्रान्तरमाह ।। **आ मामिति** । मेधादेवी माम् । आगच्छत्विति शेषः । एतादृशी सुरभिः सुगन्धा कामदुघा वा विश्वरूपा सकलवेदशास्त्रार्थधारणपूर्णरूपा । हिरण्यवर्णा स्वर्णवर्णा । जगती जगदाख्या । जगतीशब्दो लक्षणया तत्परः । जगतीस्थैः जगम्या भृशं प्राप्या । यद्वा जगतीजा भूमिजास्तैश्च । गम्या प्राप्येत्यर्थः । ऊर्जस्वती बलवती अन्नवती वा । पयसा ज्ञानाख्यक्षीरेण । पिन्वमाना प्रीणयन्ती सुप्रतीका शुभाङ्गी सुमुखी वा भूत्वा मां रक्षत्विति यावत् ।।

**सा.आ.**– विश्वरूपा बहुरूपा । हिरण्यवर्णा, जगती जगती-छन्दोभिमानिनी । जगम्या जङ्गम्या पुरुषार्थकामैर्भृशं गन्तुं योग्या । मेधा सुरभिर्माम् । आगच्छत्विति शेषः । ऊर्जस्वती बलवती । पयसा क्षीरेण पिन्वमाना । अस्मान्प्रीणयन्ती । अत्र पयो ज्ञानं सुरभित्वादेवमुक्तिः । सुप्रतीका सुमुखी भूत्वा मां जुषन्तां जुषताम् ।। अ० ४३ ।।

**मयि मेधां मयि प्रजां मय्यग्निस्तेजो दधातु । मयि मेधां मयि प्रजां मयीन्द्र इन्द्रियं दधातु । मयि मेधां मयि प्रजां मयि सूर्यो भ्राजो दधातु ।। अ० ४४ ।।**

**धी.ती.–** मेधाप्रज्ञासहिताभीष्टान्तरप्रार्थनारूपं मन्त्रमाह ।। **मयीति** । अग्निः तेजोभिमान्यन्तर्गतोऽग्निशब्दवाच्यो हरिर्मयि मेधां, मयि प्रजां पुत्रशिष्यप्रभृत्यादिप्रजां तेजः परावष्टम्भनशक्तिं च दधातु । इन्द्रः इन्द्रियाभिमानी शक्रान्तर्गतः परमैश्वर्यविषयद्रविणादिशाली हरिः । मयि मेधां मयि प्रजामित्यादि गतम् । इन्द्रियं चक्षुरादीन्द्रियपाटवं दधातु । सूर्यः सूर्यगः सूरिगम्यः परमात्मा भ्राजो दीप्तिं मयि दधातु । मयि मेधेति सर्वत्र त्रिरावृत्तिरादरार्था ।।

**सा.आ.–** अग्न्यादीन्प्रार्थयते । **मयीति** । स्पष्टार्थोऽयं मन्त्रः

।। अ० ४४ ।।

**अपैतु मृत्युरमृतं न आगन्**
**वैवस्वतो नो अभयं कृणोतु ।।**
**पर्णं वनस्पतेरिवाभिनः शीयताꣳ रयिः**
**सचतां नः शचीपतिः ।। अ० ४५ ।।**

**धी.ती.–** इतः परं बहुभिर्मन्त्रैर्मृत्युनिवृत्तिपूर्वकमभीष्टमर्थयते ।। **अपैत्विति** । नो मृत्युर्मरणमपैतु अपगच्छतु । नोऽमृतं मृतिरहिता मुक्तिः । आगन् आगच्छतु । वैवस्वतो सूर्यपुत्रो यमो नोऽस्माक-मभयं कृणोतु । वनस्पतेर्वृक्षस्य पर्णमिव पत्राणीव नोऽस्माकं रयिः विद्याधनात्मकं वित्तम् अभितः शीयतां प्ररोहताम् । शचीपतिरिन्द्र उत्पन्नां विद्याधनात्मकाम् । रयिं मयीति वर्तते । सचतां मयि सम्बध्नातु मयि स्थिरं यथा भवति तथा करोत्विति यावत् ।।

**सा.आ.–** इदानीं मृत्युनिरसनमन्त्रानाह ।। **अपैत्विति** । आगन् आगच्छतु । शपो लुकि तिपो लोपे मो न इति नत्वम् । वैवस्वतो

यमो, वनस्पतेः पर्णमिव नोऽस्माकं रयिर्द्रव्यमभिशीयतां वर्धताम् । शचीपतिर्नोऽस्मान् सचतां सेवतां बहुलायेति बोध्यम् ॥ अ०४५ ॥

**परं मृत्यो अनुपरेहि पन्थां**
**यस्ते स्व इतरो देवयानात् ॥**
**चक्षुष्मते शृण्वते ते ब्रवीमि**
**मा नः प्रजाꣳरीरिषो मोत वीरान् ॥ अ०४६ ॥**

**धी.ती.–** हे मृत्यो सर्वमारक हरे । ते देवयानात् त्वत्प्रापकार्चिरादिमार्गात् । इतरः स्वः स्वर्गस्य पन्था धूमादिमार्गस्तं मार्गं परं भगवदपरोक्षज्ञानिनमकर्मिणमेव । अनुपरेहि प्रापयतु । देवयानं प्रापयेति भावः । भगवन् चक्षुष्मते दुरितदर्शनादिक्षमालौकिकविश्वतश्चक्षुषे । शृण्वते दुरितश्रवणादिमते, ते तव ब्रवीमि विज्ञापयामि । नोऽस्मदीयां प्रजामपत्यभृत्यादिरूपां मा रीरिषः मा हिंसीः । उत वीरान्समस्तपतिपुत्रादींश्च रक्षयेति भावः ॥

**सा.आ.–** हे मृत्यो देवयानात् देवमार्गात् । इतरो यस्तेः स्वः स्वकीयः पन्थां पन्थास्तमनु अनुसृत्य परं शीघ्रं परेहि गच्छ । परमित्यस्यानन्तरं गच्छेति शेषेपान्यं पन्थानं गच्छेति वा । ब्रवीमीत्येतस्यानुगुणम् शृण्वत इति । बधिरं प्रति भाषणानुपयोगात् । चक्षुष्मत इत्येतत्तु परेहीत्यस्यानुगुणम् । अन्धस्य स्वतः स्वेन पथा गमनासम्भवात् । नः प्रजां मा रीरिषः मा हिंसय । उत अपि च । नो वीरान् मा रीरिष इति योजना ॥ अ० ४६ ॥

**वातं प्राणं मनसाऽन्वारभामहे**
**प्रजापतिं यो भुवनस्य गोपाः ॥**

स नो मृत्योस्त्रायतां पात्वꣳहसो
ज्योग्जीवाजरामशीमहि ।। अ० ४७ ।।

अमुत्र भूयादधयद्यमस्य
बृहस्पते अभिशस्तेरमुञ्चः ।।
प्रत्यौहतामश्विनामृत्युमस्मा-
द्देवानामग्ने भिषजा शचीभिः ।। अ० ४८ ।।

हरिꣳहरन्तमनुयन्ति देवा
विश्वस्येशानं वृषभं मतीनाम् ।।
ब्रह्मसरूपमनुवेदमागादयनं
मा विवधीर्विक्रमस्व ।। अ० ४९ ।।

धी.ती.– यो भुवनस्य चतुर्दशभुवनस्य तदन्तःस्थजनस्य गोपाः संरक्षकः। गुपू रक्षण इति धातोः । वातं सर्वगतं प्राणं प्रकृष्टचेष्टकम् । प्राणः प्रणयनाद्धरिरिति वचनात् । प्रजापतिं प्रजापालकं विष्णुं मनसाऽन्वारभामहे मानसपूजां कुर्मो ध्यायामश्च । स पूजितः प्राणाद्यन्तर्गतो हरिर्यथा वयं ज्योग्जीवा जीवत्वयुक्ता अजरामशीमहि प्राप्नुयाम् । तथा मृत्योस्त्रायतामंहसश्च प्राप्मभ्यश्च नः पातु । हे अग्ने अग्रत्वादिनाऽग्निशब्दवाच्य बृहस्पते बृहतां ब्रह्मादीनां पतित्वाद्बृहस्पति-शब्दवाच्य हरे । त्वममुत्र परलोके यमस्य च । अभिशस्तेः मिथ्याभिशंसनात् । यद्वा धनं तस्मात् । अधयत् अधःकुर्वन् । नोऽमुञ्चो मोचितवानसि । हे देवानां भिषजा वैद्यौ अश्विना अश्विनौ । सुपां सुलुगिति पूर्वसवर्णः। आशुगतिमत्त्वात्तदश्विशब्दाभिधेयौ भगवन्मूर्तिविशेषौ च । आशचीभिः सुवाभिः सुभेषजैर्वा मृत्युं

मरणादिकमस्मान्मदीयाज्जनात् । प्रत्यौहतां त्याजयेतां परिहरतामिति यावत् । विश्वस्येशानं प्रपञ्चस्वामिनं मतीनां तद्भर्ता ऋषभं श्रेष्ठं हरन्तं ब्रह्मादीन्निगृह्य हर्तारम् । 'ब्रह्माणमिन्द्रं रुद्रं च यमं वरुणमेव च । निगृह्य हरते यस्मात्तस्माद्धरिरिहोच्यत' इति वचनात् । एतादृशं हरिं ब्रह्मसरूपं स्वसदृशमनुपममिति यावत् । यद्वा अनुवेदम् अथ सामानि ब्रह्मणो रूपाणीति माध्यन्दिनायनवेदानुसारेण ब्रह्मसरूपं परब्रह्मसदृशं स्वस्यैव परब्रह्मत्वात्स्वसदृशमिति यावत् । हरन्तं क्रतुषु यज्ञभागमाहरन्तम् । 'इडोपहूतं गेहेषु हरे भागं क्रतुष्वहम् । वर्णो मे हरितः श्रेष्ठस्तेनाहं हरिरीयत' इति गीताभाष्योदाहृतवचनात् । अतो हरणादेव हरिशब्दवाच्यम् । एतादृशं ब्रह्म इत्यावर्तते । चतुर्मुख, एतद्ब्रह्म चतुर्मुख इत्याथर्वणभाष्योक्तेः । नपुंसकब्रह्मशब्दवाच्यत्वं चतुर्मुखस्य युज्यते । विक्रमस्व पराक्रमस्व ।। मां विवधीरिति । अयनं स्वाश्रयमगात् । तं देवाश्चानुयन्ति । अयनं मार्गमनुगच्छन्तीत्यर्थः ।।

**सा.आ.–** प्रजापतिं प्रजानां पतिं, वातं तदात्मकं प्राणं मनसाऽन्वारभामहे चिन्तयामः । यो भुवनस्य गोपा रक्षकः स मुख्यः प्राणो नोऽस्मान्मृत्योः सकाशात् त्रायताम् । अंहसः पापात्पातु । ज्योक् चिरं जीवा जीवामः । मलोपश्छान्दसः । अजरामशीमहि प्राप्नुयाम । यमस्य । सदनमिति शेषः । अधयत् अधः कुर्वन् । अधः शब्दाण्णिचि णाविष्ठवदिति टिलोपः । अमुत्र परलोकः । ममेति शेषः । भूयात् । बृहस्पते वायो । वाग्वै बृहती तस्या एष पतिरिति श्रुतेः । अभिशस्तेः मिथ्याभिशंसनजपात् यमप्राप्ताद्धिंसनाद्वा अमुञ्चः अमोचयः । शसु हिंसायामिति धातोः ।

देवानां भिषजा भिषजौ । अश्विना अश्विनौ । अस्माद्देहान्मृत्युं प्रत्यौहतां निराकुर्वताम् । अग्न इत्यस्य विक्रमस्वेत्यग्निमेणान्वयः । शचीभिः स्ववृत्तिभिः सह हरिं वातं प्राणमिन्द्रत्वेन प्राणः कल्पित इति तद्वृत्तयः शचीत्वेन कल्पिताः । हरिमित्यस्य विशेषणं विश्वस्येशानमित्यादि । विश्वस्य नियन्तारं मतीनां वृषभं सेचयितारं ब्रह्मसरूपं ब्रह्मणा हिरण्यगर्भेण सदृशम् । स्कान्दवैष्णवखण्डे तस्य भाविहिरण्यगर्भत्वोक्तेः । एवंविधं हरिं हरन्तं मृत्युं देवा इन्द्रियाद्यभिमानिनो देवा अनुयन्ति अनुगच्छन्ति । इदम् । ममेति शेषः । अयनं लिङ्गशरीरमनुमागात् मा गच्छतु । माङिलुङः सर्वलकारापवादत्वेन विध्यर्थकत्वात् । मां मा विवधीः । इदं स्थूलशरीरविषयम् । अतो विक्रमस्व मृत्युनिराकरणाय पराक्रमं कुरु ।। अ० ४७, ४८, ४९ ।।

**शल्कैरग्निमिन्धान उभौ लोकौ सनेमहम् ।।**
**उभयोर्लोकयोर्ऋध्वातिमृत्युं तराम्यहम् ।। अ०५० ।।**

धी.ती.– शल्कैः काष्ठशकलैः । शल्के शकलवल्कले इति कोशात् । समिद्भिरिति यावत् । अग्निं गार्हपत्याद्यग्निमिन्धानो दीपयन् अग्न्याधानादिकं कुर्वन् । उभौ लोकौ तत्रस्थेन्द्रादिलोकसमुदायौ । सनेमहं भजेयम् । वन षण सम्भक्ताविति धातोर्विकरणव्यत्ययश्छान्दसः । तेनाग्न्याधानदेवताभजनादिनोभयोर्लोकयोः स्वर्गापवर्गाख्यलोकद्वयोः । ऋध्वा अभिवृद्धः सन् । अहं मृत्युमतितरामि । ‘स्वर्गे लोके न भयं किञ्च नास्ति । न तत्र त्वं न ज्वरया बिभेषि’ इति कठवल्ल्युक्तेः ।।

**सा.आ.–** शल्कैः समिद्रूपैः शकलैः । इदं तिलाज्यादेरुपलक्षणम् । इन्धानो दीपयन् । अहमुभौ लोकौ सनेम् सनेयं लभेयम् । छान्दसो यलोपः । उभयोर्लोकयोः । ऋध्वा वृद्धिं प्राप्य । अहं मृत्युमतितरामि ।। अ० ५० ।।

**मा च्छिदो मृत्यो मा वधीर्मा**
**मे बलं विवृहो मां प्रमोषी ।।**
**प्रजां मा मे रीरिष आयुरुग्र**
**नृचक्षसं त्वा हविषा विधेम ।। अ० ५१ ।।**

**धी.ती.–** हे मृत्यो तदन्तर्गतहरे । उग्र क्रूर, नृचक्षसं नृणां वक्तारं, तज्ज्ञानिनं वा, त्वां वयं हविरादिपूजासाधनद्रव्येण विधेम परिचर्यां कुर्मः । तया परिचर्याया तुष्टो मां मा वधीः मा च्छिदः। हननच्छेदने मा कुर्वित्यर्थः । मे बलं मा विवृहो मा छिन्धि मा प्रमोषीश्च न्यूनं मा कुरु । किञ्च मे प्रजां पुत्रशिष्यादिभृत्यादिजनं मे आयुश्च मा रीरिष मा विनाशय । अभिवृद्धिमेव कुर्विति भावः ।।

**सा.आ.–** मृत्यो मां मा च्छिदः मा वधीः । मे बलं मा विवृहः मा हिंसय । मा प्रमोषीः मदीयबुद्धिप्रमोषं मा कुरु मदीयं माऽपहरेति वा । मे प्रजां मा रीरिषः मे आयुश्च मा रीरिषः । हे उग्र मृत्यो नॄन् चष्टे पश्यतीति नृचक्षास्तं नॄन्वर्जयन्तं वा । त्वा हविषा विधेम तोषयाम पूजयाम वा ।। ५१ ।।

**मा नो महान्तमुत मा नो अर्भकं मा न उक्षन्तमुत मा न उक्षितम् ।।**

**मा नो वधीः पितरं मोत मातरं प्रिया मा नस्तनवो रुद्र रीरिषः ।। अ० ५२ ।।**

धी.ती.– हे रुद्रान्तर्गत रुद्रावकभगवन्! त्वं च महान्तं वयोविद्यादिभिः श्रेष्ठं पुत्रम् उत नोऽर्भकं शिशुं च । मा वधीरिति सर्वत्र सम्बध्यते । नोऽस्मत्सम्बन्धिनम् उक्षन्तं रेतःसेचनशक्तं तरुणं पुत्रं च । उक्षितं सिक्तं, गर्भसिद्धं च पितरम् । उताप्यर्थे । मातरमपि मातापितरौ प्रसिद्धौ तौ च मा वधीः । नोऽस्माकं प्रियाः स्निग्धास्तनवो मूर्तयश्च मा रीरिषः मा हिंसीः ।।

सा.आ.– मा नो महान्तं वधीरित्युत्तरेणान्वयः । एवमग्रे । उक्षन्तं रेतः सिञ्चनकर्तारं तरुणम् । उक्षितं उक्षा सञ्जाताऽस्येत्युक्षितस्तारुण्य-वृद्धावस्थयोर्मध्ये वर्तिनं वृद्धं वा । हे रुद्र नः प्रियास्तनवस्तनूः मा रीरिषः । रुद्रस्य मृत्युनियामकत्वात्तत्प्रार्थना ।। अ० ५२ ।।

**मा नस्तोके तनये मान आयुषि मा नो गोषु मानो अश्वेषु रीरिषः ।।**
**वीरान्मा नो रुद्र भामितो वधीर्हविष्मन्तो नमसा विधेम ते ।। अ० ५३ ।।**

धी.ती.– हे रुद्र नस्तोके तनये अल्पे क्षुल्लके वा तनये, न आयुषि च नो गोषु प्रसिद्धवागादिषु वा नोऽश्वेषु भामितः कोपितः सन् । मा रीरिष इति सर्वत्र सम्बध्यते । म इति सर्वत्रादरातिशय-द्योतनाय पुनरुक्तिः । हे रुद्र नो वीरान् पतिपुत्रादींश्च भामितो मा

वधीः । नन्वेतावत्प्रार्थनं क्रियमाणेन मया त्वया च किं क्रियत इत्यत आह ।। हविष्मन्त इति ।। हविरादिभगवत्पूजास्थानवन्त-स्तदादाय नमसा नमस्कारपूजनादिना विधेम परिचर्यां कुर्मस्तेन तुष्टोऽस्मान् रक्षेत्यर्थः ।।

**सा.आ.–** तोके शिशौ तनये । अर्भकमित्युक्तस्यापि तोकस्याति-प्रियत्वात्पुनरुक्तिः । स्पष्टमितरत् । भामितः क्रोधयुक्तः सन् । भाम क्रोधे । हविष्मन्तो वयं नमसा नमस्कारेण ते पूजां विधेम कुर्याम ।। अ० ५३ ।।

**प्रजापते न त्वदेतान्यन्यो**
**विश्वा जातानि परिता बभूव ।।**
**यत्कामास्ते जुहुमस्तन्नो अस्तु**
**वयꣳस्याम पतयो रयीणाम् ।। अ० ५४ ।।**

**स्वस्तिदा विशस्पतिर्वृत्रहा विमृधो वशी ।।**
**वृषेन्द्रः पुर एतु नः स्वस्तिदा अभयङ्करः ।। अ०५५ ।।**

**धी.ती.–** प्रजापते प्रजापालकविष्णो! विश्वा समस्तानि जातान्युत्पन्नानीति यावत् । प्रथमा षष्ठ्यर्थे । जातानां, परिता पालयिता त्वदन्यो न बभूव नाभून्न भविष्यति चेत्यर्थः । अथ यत्कामा यदिच्छवस्ते जुहुमः होमं कुर्मः तत्कामितवस्तु । वयं रयीणां विद्याधनात्मकानां पतयः स्याम विद्यावन्तो धनवन्तश्च भवामेत्यर्थः । स्वस्तिदेत्ययमनुवाको यत इन्द्रेत्यादौ व्याख्यातः ।।

**सा.आ.–** हे प्रजापते! त्वदन्य एतानि विश्वा जातानि परिता

पालयिता । पृ पालनपूरणयोः । तृन्नन्तमेतत् । यत्कामा वयं ते तुभ्यं जुहुमस्तत् नोऽस्तु । काममेवैकदेशेन दर्शयति ।। **वयमिति** । रयीणां धनानाम् । स्वस्तिदाः स्वस्ति ददाति सः । विश्वस्पतिः प्रजानां पतिर्विमृधो विशेषेण समृद्धिकर्ता दुष्टहिंसको वा । इगुपधलक्षणः कः । वृषा अभीष्टसेचनकर्ता । पुरः पुरस्तात् । स्वस्ति दयते रक्षयतीति स्वस्तिदाः । देङ् रक्षणे । अतो न पुनरुक्तिः । इतरत्स्पष्टम् ।। अ० ५४, ५५ ।।

**त्रियम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम् ।।**
**ऊर्वारुकमिव बन्धनान्मृत्योर्मुक्षीयमामृतात् ।।अ०५६।।**

**ये ते सहस्रयुतं पाशा मृत्यो मर्त्याय हन्तवे ।।**
**तान्यज्ञस्य मायया सर्वानवयजामहे ।। अ० ५७ ।।**

**मृत्यवे स्वाहाऽमृत्यवे स्वाहा ।। अ० ५८ ।।**

धी.ती.– मृत्युजयार्थं त्र्यम्बकमन्त्रमाह ।। **त्र्यम्बकमिति** ।। त्रीण्यम्बकानि नयनानि यस्य स त्रियम्बको रुद्रस्तदन्तर्गतो नृसिंहश्च । तस्याप्युरुवृत्तरवित्रिनेत्रमिति त्रिनेत्रत्वप्रसिद्धेः । त्रियम्बकमितीयङा-देशश्छान्दसः । अम्बकशब्दपर्यायोऽयं बकशब्दोऽप्यस्तीत्येके । कथम्भूतं त्र्यम्बकमित्यत आह ।। **सुगन्धिमित्यादि** । सुगन्धिन-मित्यर्थः । शोभनं, पुष्टिवर्धनं समस्तपोषकमीशं यजामहे पूजयामः । यज देवपूजासङ्गातिकरणदानेष्विति धातोः । तेन पूजनेन ऋतात् यथार्थात् । मृत्योरपि मारकः नृसिंहश्च । बन्धनादविद्यालक्षणात् उर्वारुकमिव तत्फलमिव । **मामहं मुक्षीय** मोचयेयम् । मुच्लृ मोक्षण इति धातोः ।। **ये त इति** । हे मृत्यो मृत्युनामकनृसिंह! मर्त्याय ।

चतुर्थी द्वितीयार्थे । मर्त्यं हन्तवे हन्तुं सहस्रमयुतं तावत्सङ्ख्याकाः पाशा बन्धकाः सन्ति । तान्यज्ञस्य यज्ञभोक्तृत्वाद्यज्ञनामकस्य विष्णोः । यज्ञो वै विष्णुर्देवतेति श्रुतेः । तस्य मायया इच्छया । अवयजामः असङ्गतान्कुर्मः । यजेः सङ्गतिकरणार्थत्वात् । 'महा-मायेत्यविद्येति नियतिर्मोहिनीति च । प्रकृतिर्वासनेत्येवं तवेच्छानन्त कथ्यत' इति वचनात् । यद्वा मायया भगवदिच्छारूपप्रसादेनेत्यर्थः । प्रसादो नामेच्छाविशेष इति सुधोक्तेः ॥ **मृत्यवे स्वाहाऽमृत्यवे स्वाहेति** । मृतिप्रदत्वेन मृत्युनामकदेवतान्तर्गताय नृसिंहाय मृत्योरपि मारकत्वशक्तिप्रदाय । अमृत्यवे परमात्मने स्वाहा सुहुतमस्तु । आदराद् द्विरुक्तिः ॥

**सा.आ.–** त्रीण्यम्बकानि नेत्राणि यस्य तं, सुष्ठु गन्धो यस्य तं, उर्वारुकं लताफलविशेषः । बन्धनात् मूलात् । यथा तत्फलं पक्वबन्धनान्मूलाधारान्मुच्यते तथाऽहं मृत्योर्मुक्षीयं मुक्तो भवानि । अमृतान्मा मुक्षीयेत्यन्वयः । अयं मृत्युञ्जयमन्त्रो मृत्युनिरसनमन्त्रेषु श्रेष्ठः । हे मृत्यो! मर्त्याय मर्त्यं, हन्तवे हन्तुं, ते तव सहस्रमयुतं दशसहस्रं च मे पाशास्तान् सर्वान् यज्ञस्य विष्णोः । यज्ञो वै विष्णुरिति श्रुतेः । मायया शक्तिविशेषेण । अवयजामहे निराकुर्मः । उपसर्गवशेन धातोरर्थान्तरे वृत्तेः। मृत्यवे स्वाहा इदं द्रव्यं हविर्दत्तम् । अमृत्यवे परमात्मने स्वाहा इदं दत्तम् ॥ अ० ५६-५८ ॥

**देवकृतस्यैनसोऽवयजनमसि स्वाहा । मनुष्यकृत-स्यैनसोऽवयजनमसि स्वाहा । पितृकृतस्यैनसोऽवयजन-मसि स्वाहा । आत्मकृतस्यैनसोऽवयजनमसि स्वाहा ।**

अन्यकृतस्यैनसोऽवयजनमसि स्वाहा । अस्मत्कृत-स्यैनसोऽवयजनमसि स्वाहा । यद्दिवा च नक्तं चैनश्चकृम तस्यावयजनमसि स्वाहा । यत्स्वपन्तश्च जाग्रतश्चैनश्चकृम तस्यावयजनमसि स्वाहा । यत्सुषुप्तश्च जाग्रतश्चैनश्चकृम तस्यावयजनमसि स्वाहा । यद्विद्वाꣳश्चाविद्वाꣳश्चैनश्चकृम तस्यावयजनमसि स्वाहा । एनस एनसोऽवयजनमसि स्वाहा ।। अ० ५९ ।।

यद्वो देवाश्चकृम जिह्वया गुरुमनसो वा प्रयुती देवहेडनम् ।। अरा वा यो नो अभिदुच्छुनायते तस्मिन् तदेनो वसवो निधेतन स्वाहा ।। अ० ६० ।।

धी.ती.– इतःपरं ब्रह्मज्ञानप्रतिबन्धकीभूतपापपरिहारकैकादशहोम-मन्त्रानेकेनानुवाकेनाह ।। देवकृतस्येति । हे यज्ञ । देवकृतस्य देवैः कारितस्य ज्ञानप्रतिबन्धकस्यैनसः पापस्य अवयजनं बन्धकोऽसि । अतस्ते स्वाहा स्वाहाकारेण घृताहुत्यादि कुर्मः । मनुष्यकृतस्य मानुषशरीरेण कृतस्य हे यज्ञ त्वम् । अवयजनमसि स्वाहेति गतम् । पितृकृतस्य पितृभिः पितृपितामहाद्यैः कृतस्य । आत्मकृतस्य शरीरमनआदिना कृतस्य । अस्मत्कृतस्य मयाऽस्मदीयैश्च कृत-स्येत्यर्थः । अन्यकृतस्य अन्यसंसर्गादिना प्राप्तस्य । यद्दिवाऽह्नि, नक्तं रात्रौ चैनश्चकृम कुर्मः । तस्यैनसोऽवयजनमसि स्वाहेत्यर्थः । यत्स्वपन्तः शयनस्वप्नादिद्रष्टारो वा । यत्सुषुप्तः स्वापं कुर्वन् जाग्रतश्च जागरूपश्चैनश्चकृमेति प्राग्वत् । यद्विद्वांसश्च ज्ञानिनो वयं ज्ञात्वा पापं कुर्मोऽविद्वांसश्चाज्ञानिनः सन्त एनश्चकृमेत्यादि गतम् ।।

एनस इति । हे यज्ञ मृत्यो सर्वपापस्य निवारकोऽसि । स्वाहा मया दत्तं सुहुतमस्तु । यद्वा देवाश्चकृम इत्युत्तरोऽनुवाकः । यद्वो देवा जिह्वया कौटिल्येन गुरुमनसो गौरवोपेतमनस्काः सुलभमतय इति यावत् । प्रयुती अप्रीतिवाक्यैरपि प्रयुक्ता अप्रयुक्ता न नियुक्ता इत्यर्थः । वयं वो युष्माकं देवहेलनं देवानां निन्दनमराश्चकृम । अरा इति शफो न सवर्षः । यो नोऽभित उच्छुनायते दुष्टश्वानवदाचरति तस्मिंस्तदेनो जिव्हया देवहेलनादिकृतं पापं वसवो निधेतन तस्मिन्निधापयत स्वाहा । हे वेदप्रतिपाद्य गोविन्द त्वं च तस्मिन्निधेहीति वचनव्यत्यासेनान्वयः ॥

सा.आ.– मृत्युप्रभृतिसर्वानर्थहेतुत्वात्पापस्य तन्निरसनमन्त्रानाह ॥ **देवेति** । देवकृतस्य देवार्थं कृतस्य । यथा देवतोषाय पशुवधः । न चायं वैधत्वान्न दोषायेति वाच्यम् । यागीयहिंसाया अदोषत्वेऽप्यात्मनः पशुधनाद्यवाप्तये कृतस्य पुराणादिविहितस्य पशुवधादेराभिचारिकसमशीलत्वेन दोषत्वात् । यद्वा देवयजनार्थं परकीयद्रव्यस्तेयकृतमेन एनसः पापस्यावयजनं निराकरणम् । हे यज्ञेति शेषः । त्वमसि स्वाहेति योजना । एवमग्रेऽपि बोध्यम् । अस्मत्कृतस्य पत्नी पुत्रश्चाहं चेत्येकशेषस्त्यदादीनीति । एतेषामर्थे कृतस्येत्यर्थः । तेनात्मकृतस्येत्यनेन न पुनरुक्तिः । अस्मत्कृतस्येत्यनेन सिद्धे आत्मकृतस्येत्युक्तिरात्मनोऽत्यवश्यकत्वाभिप्रायेण । स्वपन्तः स्वप्नावस्थां प्राप्ताः ॥ **सुषुप्त इति** । सुषुप्तौ हस्तपादादिप्रक्षेपेण कृमिपतङ्गादिवधादेनः । जाग्रत इति पुनरुक्तिर्जाग्रदवस्थायां पापबाहुल्यात् ॥ **विद्वांस इति** । वयमिति शेषः । ज्ञानतोऽज्ञानतश्च चकृमेति फलितम् । एनसः पापपुरुष प्रेरणातः कृतस्यैनस इत्यर्थः ।

यद्वा पापे कर्मणि प्रवृत्तिप्रयोजकजन्मान्तरकृतपापातिशयात्कृतस्यैनस इत्यर्थः । हे देवा वसवो जिह्वया मनसो वा मनसा वा प्रयुती प्रयुत्या । तृतीयायाः पूर्वसवर्णः । धीतीतिवत् । यु मिश्रण इत्यतः क्तिन् । जिह्वामनसोर्मिश्रणेनासाधुजनमिश्रणेन वा यद्गुरुदेवहेडनं देवानादरं चकृम तदेनो नो योऽरा वा हिंसकः सन् । ऋण- धातोर्वनिपि नेड्शीतीण्निषेधे पुगन्तेति गुणे विड्वनोरित्यात्वे साधुः । अभिदुच्छुनायते दुच्छुन इवाचरति । क्यङ् दुच्छुनः साधुः । तस्मिन्वः यूयम् । छान्दसत्वात्प्रथमार्थे षष्ठी । निधेतन निधत्त । तप्तनबिति तनप् ।। अ० ६० ।।

**कामोऽकार्षीन्नमो नमः । कामोऽकार्षीत्कामः करोति नाहं करोमि । कामः कर्ता नाहं कर्ता । कामः कारयिता नाहं कारयिता । एष ते काम कामाय स्वाहा**

**।। अ० ६१ ।।**

**मन्युरकार्षीन्नमो नमः । मन्युरकार्षीन्मन्युः करोति नाहं करोमि । मन्युः कर्ता नाहं कर्ता । मन्युः कारयिता नाहं कारयिता । एष ते मन्यो मन्यवे स्वाहा**

**।। अ० ६२ ।।**

**तिलान्जुहोमि सरसाꣳसपिष्टान् गन्धार मम चित्ते रमन्तु स्वाहा ।। १ ।। गावो हिरण्यं धनमन्नपानꣳ- सर्वेषाꣳश्रियै स्वाहा ।। २ ।। श्रियं च लक्ष्मिं च पुष्टिं च कीर्तिं चानृण्यताम् । ब्रह्मण्यं बहुपुत्रताम् । श्रद्धामेधे प्रजाः सन्ददातु स्वाहा ।। ३ ।। अ० ६३ ।।**

धी.ती.– ।। इतःपरं काम एष क्रोध एष इत्यादिगीतोक्त्या तयोर्ज्ञान प्रतिबन्धकत्वात्तत्परिहारार्थं तद्देवताप्रीतये होममन्त्रमाह ।। **काम इति** । कामस्तदभिमानी देवस्तदभिमान्यसुरश्चाकार्षीत् । ज्ञानप्रतिबन्धकमिति शेषः । पूर्वं कृतवानित्यर्थः । कामस्तदभिमानी कामदेवस्त्वं ज्ञानप्रतिबन्धमकार्षीः । आवृतं ज्ञानमेतेन ज्ञानिनो नित्यवैरिणेति गीतोक्तेः । अतः प्रतिबन्धकपरिहारार्थं ते नमो नमः नमस्कारं कुर्मः । अथ कामदेवहोममन्त्रमाह ।। काम इति । कामः करोति वर्तमानज्ञानप्रतिबन्धकं पापमहं न करोमि । कामः कर्ता ज्ञानप्रतिबन्धस्य नाहं कर्ता । कामः कारयिता मद्धस्तेन ज्ञान-प्रतिबन्धकपापकारयिता । यद्वा कमु कान्ताविति धातोः कान्तत्वात्कामनामा कामगतो हरिः प्रतिबन्धकपापमकार्षीत् मद्धस्तेन कारयामास । स कारयेत्पुण्यमथापि पापमिति श्रुतेः । पूर्वमेनः कारितवान्वर्तमानकालेऽपि करोति कारयति च उत्तरत्रापि कारयिताऽपि स एव । हे काम ते कामाय एतद्घृताहुत्यादि स्वाहा सुहुतमस्तु । न केवलं कामः कर्ता कारयिता च ज्ञानप्रतिबन्धकभूतपापादीनामपि तु मन्युरपीति । तच्छान्त्यै होममन्त्रमाह ।। **मन्युरिति** । मन्युः मन्युनामा क्रोधाभिमानी रुद्रस्तन्नियामको मन्युनामा नृसिंहश्च । एन इति वर्तते । मन्युः क्रोधस्तदभिमानी तन्नियामकश्चैनो ज्ञानप्रति-बन्धकीभूतं पापमकार्षीदकारयच्च । तस्मै नमो नमः । यो मन्युरेनोऽकार्षीत्स मन्युरेनः कारयति प्रजाभिर्मया च । नाहं करोमीत्यादि स्पष्टम् । हे मन्यो ते मन्यवे मन्युनिवृत्त्यर्थमाहुत्यादिकं स्वाहा करोमीत्यर्थः । इतो ज्ञानगोहिरण्यधनादिलाभार्थं तिलहोम-मन्त्रानाह ।। **तिलानिति** । तिलान्प्रसिद्धान्सरसान्सपिष्टान् क्षीरशर्कर-

पिष्टादिसहितान् तिलान् जुहोमि । तेन होमेन हे गन्धार । देव इति वर्तते । देवा मम चित्ते रमन्तु क्रीडन्तो मम चित्तं प्रेरयन्तु स्वाहा ।। **गाव इति** । गावः प्रसिद्धाः, हिरण्यं स्वर्णं, धनं द्रविणमन्नसहितं पानं पातुं योग्यं क्षीरादिद्रवद्रव्यं नः सर्वेषां च श्रियै भूत्यै । सन्ददात्वित्युत्तरत्र विद्यमानमिहाप्यनुकृष्यते । श्रीर्ददातु तस्यै श्रियै स्वाहा ।। **श्रियं चेति** । श्रियं शोभां लक्ष्मिं लक्ष्मीं सम्पत्तिम् । ह्रस्वश्छान्दसः । पुष्टिं च समृद्धिं कीर्तिमानृण्यतां ऋणराहित्यं ब्रह्मण्यं ब्रह्मप्रियत्वं, बहुपुत्रतां बहुपुत्रत्वं श्रद्धामेधे आस्तिक्यधारणावत्यौ धियौ, प्रजाः शिष्यभृत्यादिप्रजाश्च । तिलास्तदभिमानितन्नियामकभगवद्रूपविशेषाश्च सन्ददातु स्वाहा ।।

**सा.आ.**– कामोऽकार्षीत् । पापमिति शेषः । नमो नमः कामायेति शेषः । पापे पुनर्मा प्रवर्तयत्विति नमस्कारः ।। **कामः करोतीति** । मुख्यतः प्रवृत्तिहेतुत्वात्तत्र तस्य स्वातन्त्र्यविवक्षया करणस्यापि कर्तृत्वव्यपदेशः । **नाहं करोमीति** । कामासहकारेणाहमेव न करोमीत्यर्थः । तथा च ब्रह्मसूत्रम् । तथा च तक्षोभयथेति । वाश्यादिसमवधाने तक्ष्णश्छिदाकर्तृत्वं तदसमवधाने न । तथा जीवस्यापि कामादिसमवधाने कर्तृत्वं न तदसमवधान इति तदर्थः । गीताऽपि – तत्रैवं सति कर्तारमात्मानं केवलं तु य इत्यादि । तत्र हेतुमाह ।। **कामः कर्तेत्यादि** । अर्हे तृच् । लोके कामसमवधान एव जीवस्य कर्तृत्वदर्शनेन कामस्यैव तदर्हत्वादिति भावः । कारयितृत्वमपि तस्यैवेत्याह ।। **कामः कारयितेति** । नाहं कारयितेति कारयितृत्वनिबन्धनदोषनिरसनायेदम् । नन्वीश्वरस्यैष ह्येवासाधु कर्म कारयतीति कारयितृत्वं श्रूयते । एवकारेण कामादेस्तदभावस्तत्कथ-

मुच्यते कामः कारयितेति चेत् सत्यम् । ईश्वरः कारयति किन्तु जन्मान्तरकृतपापेनोद्बोधितकामादिद्वारैवेति कामस्य कारयितृत्वोक्तेः । एतत्सर्वं मन्यावपि बोध्यम् । हे काम कामाय तुभ्यं कामाय एष स्वाहाकारः । मन्युः क्रोधः । इतरत्सर्वं पूर्ववत् । एवं विचारे होमे च पापं न विशेषतो लिम्पतीति भावः । सरसान् रससहितान् सपिष्टान् अन्तःस्थितपिष्टरूपसारसहितान् । हे गन्धार गन्धारदेश मम चित्ते रमन्तु । तिला इति शेषः । गन्धारदेशे विशेषतस्तिलोत्पत्तेर्गन्धारेति सम्बोधनम् । अन्नं च पानं चानयोः समाहारः । सर्वेषां श्रियै प्राप्त्यै श्रियं शोभां लक्ष्मिं लक्ष्मीमैश्वर्यं आनृण्यतां आनृण्यं ब्रह्मण्यं ब्रह्मणि साधुतां प्रजाः, कन्यादि पौत्रादि वा ददातु ददतु । तिला इति शेषः ।। अ० ६१, ६२, ६३ ।।

**तिलाः कृष्णास्तिलाः श्वेता-**
**स्तिलाः सोम्या वशानुगाः ।।**
**तिलाः पुनन्तु मे पापं**
**यत्किञ्चिद्दुरितं मयि स्वाहा ।। १ ।।**

**चोरस्यान्नं नवश्राद्धं ब्रह्महा गुरुतल्पगः ।।**
**गोस्तेयँसुरापानं भ्रूणहत्या**
**तिलाः शान्तिँशमयन्तु स्वाहा ।। २ ।।**

**श्रीश्च लक्ष्मीश्च पुष्टीश्च कीर्तिश्चानृण्यताम् । ब्रह्मण्यं बहुपुत्रताम् । श्रद्धामेधे प्रज्ञातु जातवेदः सन्ददातु स्वाहा ।। ३ ।। अ० ६४ ।।**

**धी.ती.–** ।। उक्तार्थे इष्टप्राप्तये तिलहोममुक्त्वाऽनिष्टपरिहाराय च तिलहोममन्त्रानाह ।। **तिला इति** । तिष्ठन्त एव लान्ति प्रयच्छन्तीति तिलनियामका भगवद्रूपविशेषाः कृष्णाः कृष्णवर्णोपेताः श्वेताः शुभ्रा-स्तस्मै । तस्य ह वा नारायणस्य चत्वारि रूपाणि शुक्लं कृष्णमित्यादि । रूपोपन्यासाच्चेति श्रुतिसूत्राभ्यां भगवतः शुक्लादिरूप-त्वोक्तेः । तिला भगवद्रूपविशेषाः सौम्या, वशानुगा भक्तिवशानुगाः । एतादृशास्तिलास्तन्नियामकाश्च मे पापं यत्किञ्चिद्दुरितमधिकं स्वल्पं च वर्तते तत्पुनन्तु स्वाहेति । चोरस्यान्नमिति चोरान्ननवश्राद्धभोजने लक्ष्येते । ब्रह्महा ब्रह्महत्याकृतो गुरुतल्पगो मातृगुरुराजभार्यादिगामी । राजभार्या गुरोर्भार्या भार्या चैव पितुस्तथेति वचनात् । गोस्तेयं गोचौर्यं सुरापानं प्रसिद्धम् । भ्रूणहत्या वेदशास्त्रसम्पन्नब्राह्मणकुमार-हत्या । एतत्सर्वं तिलाः शमयन्तु । शान्तिं प्रयच्छन्त्विति शेषः । जातवेदः जातं सर्वं वेत्तीति जातवेदस्तच्छब्दवाच्योऽग्न्यन्तर्गतो भगवान् । श्रीः लक्ष्म्यादयः प्रसिद्धास्ता आनृण्यादिकं प्रागुक्तं ज्ञानमपि भगवद्विषयत्रैकालिकज्ञानमपि । सन्ददात्वित्यादि गतम् ।।

**सा.आ.–** सौम्याः सोमदेवताकाः । वशानुगा इष्टानुगाः । पापं विपुलं, यत्किञ्चिद्दुरितमल्पं पापम् । यद्वा दुरितपदेन प्रतिबन्धकं पापम् । चोरस्यान्नं नवश्राद्धं तद्भोजनजनितं पापं, ब्रह्महा गुरुतल्पगः ब्रह्महननजनितं गुरुतल्पगमनजनितं पापं च । एतत्सर्वं तिलाः शमयन्तु । शान्तिम् प्रयच्छन्त्विति शेषः । श्रीश्च लक्ष्मीश्च श्रियं च लक्ष्मीं च प्रज्ञा प्रज्ञां जातवेदः जातवेदाः । प्रज्ञामेधयोः प्रकर्षा-प्रकर्षकृतो भेदः ।। अ० ६४ ।।

प्राणापानव्यानोदानसमाना मे शुध्यन्तां ज्योतिरहं विरजा विपाप्मा भूयास९ँ स्वाहा ।। १ ।।

वाङ्मनश्चक्षुःश्रोत्रजिह्वाघ्राणरेतोबुद्ध्याकूतिः सङ्कल्पा मे शुध्यन्तां ज्योतिरहं विरजा विपाप्मा भूयास९ँ स्वाहा ।।२।।

त्वक्चर्म मा९ँसरुधिरमेदोमज्जास्नायवोऽस्थीनि मे शुध्यन्तां ज्योतिरहं विरजा विपाप्मा भूयास९ँ स्वाहा ।।४।।

शिरःपाणिपादपार्श्वपृष्ठोरूदरजङ्घशिश्नोपस्थपायवो मे शुध्यन्तां ज्योतिरहं विरजा विपाप्मा भूयास९ँ स्वाहा ।

उत्तिष्ठ पुरुष हरित पिङ्गललोहिताक्षि देहि देहि ददापयिता मे शुध्यन्तां ज्योतिरहं विरजा विपाप्मा भूयास९ँ स्वाहा ।। ५ ।। अ० ६५ ।।

धी.ती.– इत्थं ज्ञानप्रतिबन्धनिवृत्त्युपायमुक्त्वा ज्ञानयोग्यतायै स्वशरीरावयवशुद्ध्यर्थं होममन्त्रानाह ।। प्राणापानेत्यादिना ।। प्राणादयः पञ्चवायवः प्रसिद्धाः प्रकर्षं श्वसन्नयनात्प्राणः, मलमूत्राद्यपनयनादपानः । विविधं नयनाद्व्यानो, यद्वा सप्ततिसहस्रनाडक्षिषु सञ्चरणाद्व्यानः । ऊर्ध्वं जीवं नयनादुदानः । भुक्तमन्नं शरीरावयवेषु समं नयनात्समानः । एते पञ्च वायवो जडाः । तदभिमानिनः सप्राणाश्च नागश्च कूर्मकृकलदेवदत्तो धनञ्जय इति स्मृतिप्रसिद्धाश्च शुध्यन्ताम् । अनेनाज्याज्यमेन शुद्धा भवन्तु । अहं विपाप्मा ज्ञानप्रतिबन्धकीभूतपातकरहितो, विरजा रजोगुणोपलक्षितपापकारणरजोगुणतमोगुणरहितो ज्योतिः प्रकाशरूपो भूयासं स्वाहा । वागादीनि

षट् ज्ञानेन्द्रियाणि बुद्ध्यादिसङ्कल्पा मनोवृत्तिविशेषाः । तत्र बुद्धिस्तात्कालिकी वर्तमानकालीनाऽर्थविषयिणीति यावत् । बुद्धि-स्तात्कालिकी मतेत्युक्ते । आकूतिरभिप्रायः, इदमित्थं करिष्यामीति सङ्कल्परूपा वृत्तिः सङ्कल्पः । रेतश्चरमधातुः । मे शुध्यन्तामित्यादि व्याख्यातम् । त्वगादयः सप्त धातवस्तत्र त्वक्चर्मेत्येकस्यैवान्तर-बाह्यभेदेन द्वैविध्यम् । शिर उत्तमाङ्गं, पाणिपादौ प्रसिद्धौ पार्श्वं कक्षाऽधोभागे । पार्श्वमस्त्री तयोरध इति कोशात् । पृष्ठं तनोश्चर-मभागः । पृष्ठं तु चरमा तनोः । ऊरुः सक्थिः उदरः कुक्षिः । जङ्घा जानुः शिश्नोपस्थे । पुल्लिंगस्त्रीलिङ्गभेदविवक्षया द्रष्टव्यौ । पायुः अपानप्रदेशः । एते शरीरावयवा अनेन घृतहोमेन शुध्यन्तां शुद्धा भवन्तु । ज्योतिर्ज्ञानस्वरूपोऽहं स्वतः चिदानन्दात्मकस्वरूपत्वात् जीवस्य । अन्यत्पूर्ववत् । हे हरित हरणशील । पिङ्गल पिङ्गल-वर्णोपेत । लोहिताक्षि रक्ताक्षिन् । नलोपश्छान्दसः । हे पुरुष । यद्वा हरितलोहितपिङ्गलाक्षिन् वर्णत्रयोपेताक्षित्रय नृसिंह । तस्य त्रिनेत्रत्वप्रसिद्धेः । उत्तिष्ठ उद्बुद्धोऽनुग्रहोन्मखो भव । मे ज्ञानं देहि देहि । ददापयिता गुरभिर्ज्ञानदापयिता च । भवेति शेषः ॥

**सा.आ.**– पापनिरसनमन्त्रानुक्त्वा शुद्धिमन्त्रानाह ॥ **प्राणापानेति** । ज्योतिरहं ज्योतिःस्वरूपोऽहं, विरजा रजोगुणरहितो विपाप्मा पापरहितश्च भूयासं स्वाहा तदर्थमिदमाज्यं हुतमस्तु । रेतः शरीरस्थं प्रसिद्धं दध्नि नवनीतमिव । यत्तु रेतो गुह्येन्द्रियमिति माधवेनोक्तं तन्न । अशब्दार्थत्वात् । शिश्नोपस्थेति वक्ष्यमाणेन पुनरुक्तेश्च । आकूतिः गूढाभिसन्धिः । इतरत्सर्वं स्पष्टम् । त्वक् त्वगिन्द्रियम् । स्पष्टमन्यत् । उपस्थं शिश्नस्योप समीपे स्थितमण्डादि । उत्तिष्ठ उत्थानम् ।

पुरीमवस्कन्द लुनीहि नन्दनमित्यादाविव धातुसम्बन्धे लोट् । पुरुष पुरुषत्वम् । अत्र सर्वत्र छान्दसः सुलोपः । शरीरनाडीमांसादिगतो हरितवर्णः पिङ्गलवर्णः । लोहिताक्षि लोहितं च तदक्षि च । अक्षिशब्देन गोलकम् । आदित्यश्चक्षुर्भूत्वाऽक्षिणी प्राविशदिति श्रुतेः । देहि देहि । क्रियासमभिहारे लोट् । द ददाति छान्दसो दातीत्यस्य लोपः । मत्कर्तृका पुनः पुनर्दानक्रियेत्यर्थः । दापयिता मन्निष्ठा दापनक्रियेत्यर्थः। ब्रह्महा गुरुतल्पग इतिवन्निर्देशः । इमाः क्रिया इमानि च रूपाणि मे शुध्यन्तामित्यर्थः । रूपस्य सामान्येन वक्ष्यमाणस्य विशेषेणायं निर्देशः

।। अ० ६५ ।।

**पृथिव्यापस्तेजोवायुराकाशा मे शुध्यान्तां ज्योतिरहं विरजा विपाप्मा भूयास९ँ स्वाहा ।। १ ।।**

**शब्दस्पर्शरूपरसगन्धा मे शुध्यन्तां ज्योतिरहं विरजा विपाप्मा भूयास९ँ स्वाहा ।। २ ।।**

**मनोवाक्कायकर्माणि मे शुध्यन्तां ज्योतिरहं विरजा विपाप्मा भूयास९ँ स्वाहा ।। ३ ।।**

**अव्यक्तभावैरहङ्कारैर्ज्योतिरहं विरजा विपाप्मा भूयास९ँ स्वाहा ।। ४ ।।**

**आत्मा मे शुध्यन्तां ज्योतिरहं विरजा विपाप्मा भूयास९ँ स्वाहा ।। ५ ।।**

**अन्तरात्मा मे शुध्यन्तां ज्योतिरहं विरजा विपाप्मा भूयास९ँ स्वाहा ।। ६ ।।**

परमात्मा मे शुध्यन्तां ज्योतिरहं विरजा विपाप्मा भूयासꣳ स्वाहा ॥ ७ ॥

क्षुधे स्वाहा । क्षुत्पिपासाय स्वाहा । विविट्यै स्वाहा । ऋग्विधानाय स्वाहा । कषोत्काय स्वाहा ॥ ८ ॥

क्षुत्पिपासामलां ज्येष्ठामलक्ष्मीं नाशयाम्यहम् । अभूतिम समृद्धिं च सर्वान्निर्णुद मे पाप्मानं स्वाहा ॥ ९ ॥

अन्नमयप्राणमयनोमयविज्ञानमयमानन्दमयमात्मा मे शुध्यन्तां ज्योतिरहं विरजा विपाप्मा भूयासꣳ स्वाहा ॥१०॥ अ० ६६ ॥

धी.ती.– मे शरीर उपादानभूताः पृथिव्याकाशान्ताः । शब्देत्यादि स्पष्टार्थम् । मनःकर्म इदमित्थं करिष्यामीति सङ्कल्परूपं, वाक्कर्म तथावचनं, कायकर्म यथोक्तं तथा कायेन करणम् । तानि शुध्यन्ताम् । अव्यक्तभावैरस्फुटिताभिप्रायैरहङ्कारैरहंममतादिभिः । अत्र तृतीया प्रथमार्थे । अहंममतादयः शुध्यन्तामिति वर्तते । यद्वा अव्यक्तात्प्रकृत्या भवन्तीति भावा उत्पन्ना अहङ्कारा मनोवृत्ति-विशेषाश्च । आत्मा स्थूलशरीरं शुध्यन्तां शुध्यतां छान्दसं बहुवचनम् । यद्यपि शुद्धिविषयवस्तुभिरात्मान्तरात्मपरमात्मादिभगवद्रूपाणां शुद्धिप्रार्थन मयुक्तं तेषां नित्यशुद्धत्वात् । तथाऽप्यात्मादिशब्दार्था अन्य एव वाच्याः । तथा हि । मे आत्मा आत्मानः स्थूलदेहाः । सुपां सुलुगिति जसः सुः । शुध्यन्तामिति बहुवचनानुरोधात् । एव-मुत्तरत्रापि । यद्वा शुध्यन्तां शुध्यतामिति वचनव्यत्ययः ।

अन्तरात्मा अन्तस्थाः सूक्ष्मदेहधृत्यादयो मे शुध्यन्तां शुद्धा भवन्तु । मे मदीयपरमात्मानः देहाद्यपेक्षयोत्तमा अन्तःकरणजीवादयः शुध्यन्तामिति । आत्मा जीवे धृतौ देहे स्वभावे परमात्मनीति कोशात् ।

अथ क्षुधादिदोषपरिहाराय मन्त्रानाह ।। क्षुधे इति । क्षुदभिमानि देवतायै तन्नियामकहरये तच्छब्दवाच्याय स्वाहा । क्षुत्पिपासाय क्षुत्सहिता पिपासा यस्य तन्नियामकाय भगवते स्वाहा । विवट्यै विपूर्वात् विषॢ व्याप्ताविन्यौणादिके डप्रत्यये षकारस्य छान्दसे टकारे विवट्यै व्याप्ताय विष्णव इत्यर्थः । ऋग्विधानाय ऋगादिवेदैर्मुख्योपास्यतया विहिताय । मां विधत्तेऽभिधत्ते मां विकल्प इत्याद्युक्तेः । घटोत्काय घुष्यते क्रियत इति घटो नामरूपात्मकप्रपञ्चस्तत्कर्तुमुत्क उत्सुकस्तस्मै ब्रह्मण इति सुहुतमस्तु । कषोत्कायेति पाठेऽसुरादिकषणोत्सुकायेत्यर्थः । कष कर्षण इति धातोः । क्षुत्पिपासा क्षुद् बुभुक्षा पिपासा पातुमिच्छा त एव मले असारभूते यस्यास्तां ज्येष्ठां समुद्रमथने प्रथममुत्पन्नामलक्ष्मीं कालिपत्नीमभूतिमनैश्वर्यमसमृद्धिं च । सर्वानहं क्षुधादिहोमेन नाशयामि । हे हरे पाप्मानं निर्णुद परिहर स्वाहा इदं हविरादिकं सुहुतमस्तु । अन्नमयादेः पञ्चकोशात्तन्नियामकवारुण्युपनिषदुक्ता ब्रह्मरूपातिरिक्तास्तन्नियम्याः शरीरोपादानभूताः । एते विरजाहोममन्त्रा उपाकर्मसन्न्यासादौ क्रियमाणहोमार्थाः शुद्धिहेतवः ।।

**सा.आ.–** पृथिवीत्यादि । एतच्छ्रुतिबलाद्वाय्वाकाशयोः शरीरोपादनत्वमित्यन्ये । अनुपादानत्वेऽपि शरीरे स्थितिमात्रेणैतत् उपादानत्वं त्रयाणामेवेत्यपरे । यद्वा हे पुरुष परमेश्वर । उत्तिष्ठ । मामनुग्रहीतुमिति शेषः । हरितादीनि त्रीणि तस्य विशेषणानि ।

समासान्तविधेरनित्यत्वान्न षच् । देहि देहि । पुत्रकलत्रधनादीनिति शेषः । हे द दातः । दाधातोर्डः । दापय । मयेति शेषः । मे, त्वया दत्ताः सर्वे शुध्यन्तामित्यन्वयः । शब्देत्यादि स्पष्टार्थम् । मनोवाक्कायकर्माणि मनःकर्माणि वाक्कर्माणि कायकर्माणि चेत्यर्थः । अव्यक्तभावैः अव्यक्तविकारैरहङ्कारैरहङ्कारेण । वृत्तिबहुलाद्बहुवचनम् । युक्त इति शेषः । आत्मा स्थूलशरीरं शुध्यन्तां शुध्यताम् । छान्दसं बहुवचनम् । एवमग्रे । अन्तरात्मा लिङ्गशरीरं परमात्मा जीवः । मे इति षष्ठी तु चैतन्यस्य स्वरूपमितिवत् । क्षुधे क्षुदादयः शब्दा-स्तदभिमानिदेवतापराः । विविटी नाम देवी । ऋग्विधानाय तदभिमानिने । कषोत्काय कषो हिंसा । कषतेर्हिंसार्थत्वात् । तत्रोत्क उत्कण्ठितस्तादृशो देवविशेषः । क्षुत्पिपासां तदभिमानि-देवताम् । अलक्ष्मीः अलक्ष्मीम् । अलं नाशयामीत्यन्वयः । अभूत्यादिशब्दौ तदभिमानिदेवतापरौ । मे पाप्मानं च निर्णुदेत्यन्वयः। विज्ञानमयान्तः समाहारद्वन्द्वः । अन्नमयादयो विज्ञानमयान्ताः कोशाः

॥ अ० ६६ ॥

**अग्नये स्वाहा । विश्वेभ्यो देवेभ्यः स्वाहा । ध्रुवाय भूमाय स्वाहा । ध्रुवक्षितये स्वाहा । अच्युतक्षितये स्वाहा । अग्नये स्विष्टकृते स्वाहा । धर्माय स्वाहा । अधर्माय स्वाहा । अद्भ्यः स्वाहा । ओषधिवनस्पतिभ्यः स्वाहा ॥ १ ॥**

**रक्षोदेवयजनेभ्यः स्वाहा । गृह्याभ्यः स्वाहा । अवसानेभ्यः स्वाहा । अवसानपतिभ्यः स्वाहा । सर्वभूतेभ्यः स्वाहा । कामाय स्वाहा । अन्तरिक्षाय स्वाहा ॥ २ ॥**

यदेजति जगति यच्चेष्टति नाम्रे भागोऽयं नाम्नो स्वाहा । पृथिव्यै स्वाहा । अन्तरिक्षाय स्वाहा । दिवे स्वाहा । सूर्याय स्वाहा । चन्द्रमसे स्वाहा । नक्षत्रेभ्यः स्वाहार । इन्द्राय स्वाहा । बृहस्पतये स्वाहा । प्रजापतये स्वाहा । ब्रह्मणे स्वाहा । स्वधा पितृभ्यः स्वाहा । नमो रुद्राय पशुपतये स्वाहा ॥ ३ ॥

देवेभ्यः स्वाहा । पितृभ्यः स्वधाऽस्तु । भूतेभ्यो नमः। मनुष्येभ्यो हन्ता । प्रजापतये स्वाहा । परमेष्ठिने स्वाहा। यथा कूपः शतधारः सहस्रधारो अक्षितः । एवा मे अस्तु धान्य९-सहस्रधारमक्षितम् । धनधान्यै स्वाहा । ये भूताः प्रचरन्ति दिवानक्तं बलिमिच्छन्तो वितुदस्य प्रेष्याः । तेभ्यो बलिं पुष्टिकामो हरामि । मयि पुष्टिं पुष्टिपतिर्दधातु स्वाहा ॥ ४ ॥ अ० ६७ ॥

धी.ती.– अथ पञ्चसूनादिदोषपरिहारार्था वैश्वदेवबलिहरणहोममन्त्रा उच्यन्ते । अग्नय इति ऋग्भाष्योक्ताग्रत्वादिप्रवृत्तिनिमित्तैरग्नि-शब्दवाच्यायाग्न्यन्तर्गताय हरये स्वाहेत्यर्थः । विश्वेभ्यो देवेभ्यः पूर्णत्वेन क्रीडादिगुणविशिष्टत्वेन विश्वेदेवपदवाच्येभ्यो विश्वेदेवान्त-र्यामिभ्यो भगवद्रूपेभ्यः । ध्रुवाय भूमाय अचञ्चलत्वपूर्णत्वादिना ध्रुव-भूमपदाभिधेयाय ध्रुवभूमाख्यदेवतान्तर्यामिणे विष्णवे । ध्रुवा नित्या क्षितिर्भूमिर्यस्याः सः । ध्रुवक्षित्याख्यदेवस्थाय तच्छब्दवाच्याय वराह-रूपिणे । अच्युतक्षितये अनपगतक्षितये अनपगतक्षितित्वेनाच्युतक्षिति-शब्दितदेवनियामकाय भगवते । अग्नये स्विष्टकृते सु सम्यगिष्टमभीप्सितं

करोतीति स्विष्टकृतत्वगुणकायाग्नये । धर्माय धारकत्वाद्धर्मशब्दवाच्याय धर्माभिमानियमान्तर्गताय हरये । अधर्माय अधर्माभिमानिनिर्ऋताख्य-कोपपगत्वेनाधर्मशब्दिताय हरये । अद्भ्योऽबभिमानिवरुणबुधान्तर्गताय व्याप्ततयाऽपूशब्दिताय भगवत इत्यर्थः । ओषधिवनस्पतिभ्यः उष्टाः संसारदवाग्निदग्धा धीयन्ते निधीयन्तेऽस्मिन्नित्योषधिशब्दवाच्यायौष-ध्यन्तर्गताय । वन षण सभम्क्ताविति धातोः स्वस्माद्विभक्तानां भिन्नानां स्वामित्वेन वनस्पतिशब्दाभिधेयेभ्यो भगवद्रूपेभ्य ओषधि-वनस्पत्यन्तर्गतेभ्यः ।

रक्षोदेवयजनेभ्यः रक्षसां देवानां च यजनं येषु स्थानेषु तानि स्थानानि रक्षोदेवयजनानि तत्स्थतदभिमानिदेवनियामकेभ्यो भगव-द्रूपेभ्यः । गृह्याभ्यः गृह्या वेदविनियोजकग्रन्थविशेषा मन्त्रविशेषा वा तदभिमानिदेवता गृह्यास्ताभ्यस्तन्नियामकभगवन्मूर्तिभ्यः । अवसानेभ्यः मन्त्रान्तक्रियान्ता अवसाना इत्युच्यन्ते । तदभिमानिभ्य-स्तन्नियामकेभ्यः । अवसानपतिभ्यः अवसानस्वामिभ्यः । सर्वभूतेभ्यः सर्वप्राणिनियामकेभ्यो भगवद्रूपेभ्यः । कामाय कमनीयाय कामान्त-र्गताय । अन्तरिक्षाय अन्तरीक्षणीयत्वेनान्तरिक्षशब्दितायान्तरिक्ष-लोकगतायेत्यर्थः ।

जगति यद्भगवत एजति कम्पते यच्चेष्टति भगवत्प्रेरणया स्वव्यापारं करोति यन्नाम्ने तादृशनामविशिष्टस्य भगवतो जगज्जगदिति वर्तते । भार्गोऽशस्तन्नाम्ने भगवते । पृथिव्यै तन्नाम्ने हरये च । अन्तरिक्षाय अन्तरिक्षलोकस्थाय । दिवे द्युलोकस्थाय सूर्याय सूरिगम्यत्वेन सूर्यशब्दवाच्याय । चन्द्रमसे आल्हादकत्वेन चन्द्रमश्शब्दिताय चन्द्रमोऽन्तर्गताय हरये । नक्षत्रेभ्यः नक्षत्रनियामकेभ्यो भगवद्रूपेभ्यः ।

इन्द्राय परमैश्वर्यशालित्वेनेन्द्रशब्दितायेन्द्रान्तस्थाय । बृहस्पतये बृहतां ब्रह्मादीनां पतये बृहस्पत्यन्तर्गताय । प्रजानां पालनात्प्रजापति शब्दवाच्याय प्रजापत्यन्तर्गताय । ब्रह्मणे परब्रह्मणे । स्वाहेति सर्वत्र । अस्तु स्वधा पितृभ्यः पितृदेवतान्तर्गतेभ्योऽस्तु स्वधा । नमो रुद्राय पशुपतये । एतावन्तो वै पशवो द्विपाच्चतुष्पाच्चेति श्रुतेः । पशुशब्दितद्विपाच्चतुष्पात्स्वामिने रुद्राय तदन्तर्गताय रुग्द्रावकाय सङ्कर्षणाय च नमः स्वाहेत्यर्थः ।

देवेभ्यो ब्रह्मदिदेवेभ्यस्तदन्तर्यामिभ्यो भगवद्रूपेभ्यः स्वाहाऽस्तु । पितृभ्यः स्वधाऽस्तु गतम् । भूतेभ्यः समस्तप्राणिभ्यः प्रमथगणेभ्यो वा नमोऽस्तु । मनुष्येभ्योऽहंममताऽस्तु । प्रजापतये दक्षप्रजापतये परमेष्ठिने उत्तमाय । व्रीह्यादित्वादिनिः । चतुर्मुखान्तर्गताय परब्रह्मणे स्वाहेति ।। **यथा कूप इति** ।। यथा कूपोऽन्तः अक्षीणशतधारः सहस्रधारो भवति एवमन्तरिक्षम् अक्षीणं सहस्रधारं सहस्रमुखादा-यतिमत् धान्यं व्रीह्यादिकं मेऽस्तु भूयात् । धनधान्यै स्वाहा धनधान्यादिकं सुहुतमस्तु ।। **ये भूता इति** । वितुदस्य विशेषेण तुदति व्यथयतीति वितुदो भूतपतिस्तस्य प्रेष्या भृत्या दिवानक्तं अहोरात्रं प्रचरन्ति सर्वत्र सञ्चरन्ति तेभ्यो भूतेभ्यो विष्णुभूतेभ्यः प्रमथगणेभ्यश्च पुष्टिकामो वृद्ध्यपेक्षी अहं बलिं हरामि बलिहरणं करोमि । तेन बलिप्रदानेन मयि पुष्टिं वृद्धिं पुष्टिपतिर्वृद्ध्यादिप्रदो भगवान् दधातु मह्यं प्रयच्छतु स्वाहेत्यर्थः ।।

**सा.आ.–** अग्नये स्वाहेत्यादयः षट् वैश्वदेवाहुतिमन्त्राः । ततःपरे बलिहरणाहुतिमन्त्राः । धर्मादयश्शब्दास्तदभिमानिदेवतापराः । यदेजति कम्पते भ्राजते वा जगति यच्चेष्टते च । अयं सर्वनाम्ने भागो

नामभाक् । सर्वस्य सनासमत्वात् । नामाभिमानिदेवताभागो वा । अतो नाम्ने स्वाहा नामाभिमानिदेवतायै स्वाहा । स्वधा देवी तत्सहितपितृभ्यः स्वधा पितृभ्यः स्वधानामकपितृभ्यो वा । प्रजापतयेऽन्तरिक्षाय च तत्तद्देवतासमभिव्याहारेण द्विराहुतिर्विज्ञेया । यथा कूपः । अन्तः शतधारः सहस्रधारो वा । अक्षितः जलनाश-रहित एव एवं मे धान्यं सहस्रधारं सत् अक्षितमस्तु । अतो धनधान्यै स्वाहा धनधान्याभ्यां स्वाहा समाहारद्वन्द्वः । छान्दसत्वा-दाद्यादेशाभावः । इदमपि तदभिमानिदेवतापरम् । विशेषेण तुदति प्राणिनो व्यथतीति वितुदो यमस्तस्य प्रेष्याः किङ्कराः।। अ० ६७ ।।

**ॐ तद्ब्रह्म । ॐ तद्वायुः । ॐ तदात्मा । ॐ तत्सत्यम् । ॐ तत्सर्वम् । ॐ तत्पुरोर्नमः ।**

**अन्तश्चरति भूतेषु गुहायां विश्वमूर्तिषु ।।**

**त्वं यज्ञस्त्वं वषट्कारस्त्वमिन्द्रस्त्वꣳ रुद्रस्त्वं विष्णु-स्त्वं ब्रह्म त्वं प्रजापतिः । त्वं तदाप आपो ज्योती रसोऽमृतं ब्रह्म भूर्भुवस्सुवरोम् ।। अ० ६८ ।।**

धी.ती.– पुनः परमात्मनो नारायणस्य वाय्वादिसर्वान्तर्यामित्वा-त्सर्वगतत्वमहिमानमाह ।। ॐ तद्ब्रह्मेत्यादिना । अन्ये तु प्राणायामे वैकल्पिकोऽयं मन्त्र इत्याहुः । यत् ॐ प्रणवप्रतिपाद्यं तद्ब्रह्म गुणपूर्णं नारायणाख्यमित्यर्थः । अथ कस्मादुच्यते ब्रह्मेति बृहन्तो ह्यस्मिन्गुणा इति श्रुतेः । तथा यो वायुः सूत्रात्मा तदन्तर्गतं वायुशब्दवाच्यं ॐ तद्गुणपूर्णं सर्ववेदप्रतिपाद्यं व्याप्तं चेत्यर्थः । यदात्मा आदानादि-

कर्तृत्वेनात्मशब्दितं जीवान्तर्गतं ॐ तत् ॐङ्कारप्रतिपाद्यं ब्रह्म सत्यं यथार्थवचनादिसद्भावप्रापकं च । ॐ तत् पूर्ववत् । यत्सर्वं सर्वजगदन्तर्यामिसर्वसर्जकं ॐ तत् गतम् । यत्पुरः स्थूलसूक्ष्म-शरीरस्थं ॐ तद्ब्रह्म । नन्वत्र परमात्मना जीवजडाद्यभेदः प्रतीयते । स तावदनुपपन्नः । प्रत्यक्षादिबहुप्रमाणविरोधात् । अन्तश्चरतीत्युत्तर-वाक्याननुगुणश्च । अतोऽन्तर्यामिपरतया व्याख्येयः ।। **अन्तश्चर-तीति** । विश्वमूर्तिषु देवमनुष्यादिनानाशरीरयुक्तेषु भूतेषु प्राणिषु गुहायां तद्धृदयमध्ये ॐ प्रणवप्रतिपाद्य आत्माऽन्तश्चरति । अन्तश्चरसीति पाठे ॐ ब्रह्मन् त्वन्मन्तश्चरसीत्यर्थः । यद्वा चरतीत्यस्यैव चरसीति पुरुषव्यत्ययेनार्थः । त्वमित्युत्तरवाक्यानुगुण्यात् । हे परमात्मन् अन्तश्चरस्त्वं यज्ञ; ज्योतिष्टोमादियज्ञगतस्तद्भोक्तृत्वाच्च यज्ञनामा त्वम् । वषट्कारः वौषडित्याक्रियमाणत्वात् । त्वमिन्द्रः परमैश्वर्यादिति ऋग्भाष्योक्तदिशेन्द्रनामेन्द्रगः । रुद्रनामा रुद्रान्तर्गतरुद्रनामा सङ्कर्षण-स्त्वमसि । विष्णुर्व्याप्तस्त्वं ब्रह्मसर्जकतया प्रसिद्धचतुर्मुखान्तर्गतो ब्रह्मनामा । ब्रह्मणि ब्रह्मरूपोऽसाविति वचनात् । प्रजानां पालकः प्रजापतिशब्दवाच्यो दक्षप्रजापतिगतश्च । तदापोऽन्यव्द्याख्यातम् ।।

**सा.आ.–** ॐतच्छब्दाभ्यां प्रतिपाद्यं वस्तु ब्रह्म ब्रह्मशब्दप्रतिपाद्यं एवमग्रे । ॐ तत्सर्वं ॐ तच्छब्दवाच्यं वस्तु सर्वं सर्वशब्दवाच्यम् । अतः ॐ तच्छब्दवाच्यस्य पुरोः बहुरूपस्य परमात्मनो नमः नमस्कारोऽस्तु । पुरुरूपत्वमुपपादयति ।। **अन्तरिति** । भूतेषु प्राणिषु गुहायां हृदये विश्वमूर्तिषु समस्तेषु घटपटादिष्वन्तश्चरति । अतः पुरुरूप इत्यर्थः । त्वं यज्ञः यज्ञशब्दवाच्यः । एवमग्रे । वषट् क्रियत इति वषट्कारः । इन्द्रः परमैश्वर्यात् । त्वं विष्णुस्त्वं ब्रह्म

विष्णुब्रह्मशब्दद्वयवाच्यः । त्वं तदापः त्वं तदापश्शब्दवाच्यः । आपोज्योतिरादि शिरोमन्त्रे गतम् । सकलशब्दवाच्यः । यद्वा त्वं तदापः प्राप्तवान् अत आपआदिशब्दवाच्यः । यद्वा त्वं यज्ञाद्यात्मेत्यर्थः ॥ अ० ६८ ॥

**श्रद्धायां प्राणे निविष्टोऽमृतं जुहोमि प्राणाय स्वाहा । श्रद्धायामपाने निविष्टोऽमृतं जुहोमि अपानाय स्वाहा । श्रद्धायां व्याने निविष्टोऽमृतं जुहोमि व्यानाय स्वाहा । श्रद्धायामुदाने निविष्टोऽमृतं जुहोमि उदानाय स्वाहा । श्रद्धायां समाने निविष्टोऽमृतं जुहोमि समानाय स्वाहा । ब्रह्मणि म आत्माऽमृतत्वाय ॥ १ ॥ अमृतोपस्तरणमसि ॥ २ ॥**

**श्रद्धायां प्राणे निविष्टोऽमृतं जुहोमि । शिवो मा विशाप्रदाहाय । प्राणाय स्वाहा । श्रद्धायामपाने निविष्टोऽमृतं जुहोमि । शिवो मा विशाप्रदाहाय । अपानाय स्वाहा । श्रद्धायां व्याने निविष्टोऽमृतं जुहोमि । शिवो मा विशाप्रदाहाय । व्यानाय स्वाहा । श्रद्धायामुदाने निविष्टोऽमृतं जुहोमि । शिवो मा विशाप्रदाहाय । उदानाय स्वाहा । श्रद्धाया॑ समाने निविष्टोऽमृतं जुहोमि । शिवो मा विशाप्रदाहाय । समानाय स्वाहा । ब्रह्मणि म आत्माऽमृतत्वाय ॥३॥ अमृतापि धानमसि ॥ ४ ॥अ० ६९॥**

धी.ती.– अथ प्राणाद्याहुतिमन्त्रानाह ॥ श्रद्धायामिति । श्रद्धायां

आस्तिक्यबुद्धिप्यभिमानिन्यां वायुपत्न्याम् । श्रद्धेति वायोः पत्नी स्यादिति षट्प्रश्नभाष्यात् । प्राणे मुख्यप्राणरूपे प्राणाख्ये च निविष्टोऽभिनिवेशितान्तःकरणोऽहम् । अमृतं अनुयागवैश्वदेवाख्यहोमशेषं भगवद्भुक्तं शेषं स्वादुभूतं वेदं हविर्जुहोमि । अस्मिन्प्राणाग्नौ वा प्रक्षिपामि । अमृतं विघसो यज्ञशेषभोजनशेषयोरिति कोशात् । आस्यमाहवनीय इति श्रुत्याऽऽस्यस्य प्राणाहुत्यादिहोमाधारत्वात् । प्राणाग्न्य एवैतस्मिन्पुरो जाग्रत इति प्राणादेरग्नित्वाद्यभिधानात् । प्राणाय स्वाहा प्राणाय सुहुतमस्तु । एवं श्रद्धायामपान इत्यादि-वाक्यानि योजनीयानि ।। **ब्रह्मणीति** ।। एतैः प्राणादिपञ्चाहुतिभिर्मे आत्मा जीवोऽमृतत्वाय मोक्षाय ब्रह्मणि ब्रह्मनिष्ठः । भवत्विति शेषः। स एनान्ब्रह्म गमयतीत्याहुत्यादिना तुष्टस्य प्राणस्य ब्रह्मप्रापकत्वोक्तेः। भोजनादौ भोजनान्ते चापां प्राशनं प्राणस्य वस्त्रबुद्ध्या कार्यम् । वाजसनेयके प्राणविद्यायाम् - तस्मादशिष्यं नाचामेदशित्यावाचमेत्तदन्न-मनग्नं कुरुत इति । 'प्राणस्य वस्त्रबुद्ध्या तु भोजनोभयतः पिबन् । स्वर्गेषु मुक्तौ च तथा वस्त्रलाभी भवत्यलम्' इत्याद्यन्तमाचमनयोः प्राणदेववस्त्रत्वाभिधानादावश्यकत्वेन प्रथमोदकपाने मन्त्रमाह ।। अमृतोपस्तरणमसीति । हे पीयमानोदक त्वममृतमविनाशी । यथा पुंसः शयानस्य शयनादुपरिवस्त्रमुपस्तीर्यते तद्वदिदमाद्यं जलप्राशनम् । यद्वा कटिप्रदेशे उपस्तीर्यमाणपटसदृशोऽसीत्यर्थः । श्रद्धायां प्राणे निविष्टोऽमृतं जुहोमीति प्राणाहुतिष्वेव वैकल्पिकान्मन्त्रानाह ।। श्रद्धायां प्राण इति । मुख्यप्राणपत्न्यां प्राणे मुख्यप्राणरूपेऽपानादिरूपेषु च । मुख्यस्यैव स्वरूपाणि प्राणाद्याः पञ्च वृत्तय इति सूत्रभाष्यात् । तेषु निविष्टोऽभिनिवेशितचित्तोऽमृतं यज्ञशेषं भगवद्भुक्तशेषं वा हविर्जुहोमि आस्याख्याहवनीयाग्नौ प्रक्षिपामि । हुतान्न त्वं शिवो मङ्गलप्रदो भूत्वा

अप्रदाहाय क्षुत्पिपासादिदाहपरिहाराय मामाविश । प्राणाय स्वाहा । प्राणापानादिभ्यः स्वाहा सुहुतमस्तु । अन्यत्पूर्ववदुक्तार्थम् । अमृतापिधानमसीत्याद्युत्तरापोशनमन्त्रः । हे प्रास्यमानोदक अमृत-मविनाश्यपिधानमाच्छादनमसि । अपिधानतिरोधानपिधानाच्छादनानि चेति कोशात् ।।

**सा.आ.–** श्रद्धायां निविष्टोऽहं श्रद्धावानहं प्राणेऽमृतं जुहोमि । प्राणाख्ये वायौ प्रथमग्रासरूपमन्नममृतरूपं जुहोमि होष्यामि । होमस्याग्रे भावित्वात् । एवमग्रे योजना । ब्रह्मणि म इत्यस्यार्थः स्पष्टीभविष्यति । पूर्वापोशनमन्त्रमाह । **अमृतेति** । हे अमृत अमृतरूपजल । उपस्तरणमसि भोक्ष्यमाणान्नाहुतीनामाधारद्रव्यमसि । यद्वा वायोरुपवेशनवस्त्रमसि । प्राणाद्याहुतिमन्त्रानाह ।। **श्रद्धाया-मित्यादिना** । शिवो भूत्वा मा मां विश प्रविश । अप्रदाहाय अप्रदाहार्थं क्षुज्जनितदाहशान्त्यर्थम् । अत्र जुहोमीति वर्तमानकाले प्रत्ययः । एवमग्रे ।। **ब्रह्मणीति** । मे आत्मा अमृतत्वाय आत्मनोऽमृतत्वाय अमृतीभवाय ब्रह्मणि ब्रह्मण्येव सर्वमिदं जुहोमीत्यर्थः । तथा च स्मृतिः । ब्रह्मार्पणं ब्रह्महविरित्यादि । उत्तरापोशनमन्त्रमाह ।। **अमृतेति** । अमृत जल । पयः कीलाल-ममृतमिति कोशात् । एवमपि पूर्वत्र बोध्यम् । अपिधानं भुक्तस्यान्नस्य वायोः प्राणस्य वाऽऽच्छादनमसि ।। अ० ६९ ।।

**श्रद्धायां प्राणे निविश्यामृतं हुतम् । प्राणमन्नेनाप्याय-स्व । श्रद्धायामपाने निविश्यामृतं हुतम् । अपानमन्ने-नाप्यायस्व । श्रद्धायां व्याने निविश्यामृतं हुतम् ।**

**व्यानमन्नेनाप्यायस्व । श्रद्धायामुदाने निविश्यामृतं हुतम् । उदानमन्नेनाप्यायस्व । श्रद्धायां समाने निविश्यामृतं हुतम् । समानमन्नेनाप्यायस्व ॥ अ० ७० ॥**

**धी.ती.**– भोजनानन्तरं भुक्तान्नानुमन्त्रपमन्त्रानाह ॥ **श्रद्धाया-मिति** । वेदशास्त्रोक्तं सर्वं सत्यम् । तदनुष्ठानेन मम प्रयोजनमस्तीति बुद्धिः श्रद्धा । तदभिमानिन्यां श्रद्धायां प्राणे च निविश्यादरातिशयं कृत्वा अमृतं यज्ञशेषमन्नं हुतम् । हे प्राणदेव मया हुतेनान्नेन प्राणमिन्द्रियजातम् आप्यायस्व तृप्तं कुरु । एवमुत्तरवाक्यान्यपि द्रष्टव्यानि ॥

**सा.आ.**– श्रद्धायां निविश्य प्राणेऽमृतं हुतमित्यन्वयः । श्रद्धा प्राणपत्नी तत्र प्राणे च स्वात्मानं निविश्येत्यर्थः । सादरो भूत्वेति वा । एवं पूर्वत्रापीत्यन्ये । प्राणं हे प्राण त्वमन्नेनाप्यायस्व तृप्तिं प्राप्नुहि । एवमग्रे । हे परमेश्वर प्राणमन्नेन तर्पयेति वा ॥अ० ७०॥

**अङ्गुष्ठमात्रः पुरुषोऽङ्गुष्ठं च समाश्रितः ।**
**ईशः सर्वस्य जगतः प्रभुः प्रीणाति विश्वभुक् ॥अ०७१॥**

**धी.ती.**– पुनर्भुक्तानुमन्त्रपमन्त्रान्तरमाह ॥ **अङ्गुष्ठेति** । अङ्गुष्ठ-परिमितः पुरुषः परमात्मा । अङ्गुष्ठं चशब्दात्परिमितहृदयाकाशं समाश्रितो हृत्पद्मगत इत्यर्थः । सर्वस्य जगतः समस्तप्रपञ्चस्येशः स्वामी । विश्वभुक् सर्वभोक्ता । 'अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति । ईशानो भूतभव्यस्य ततो न विजुगुप्सत' इति श्रुत्यन्तर-समाख्यानात् । अन्यत्रादृष्टं सर्वभोक्तृत्वं कथमस्येत्यत आह ॥ **प्रभुरिति** । हेतुगर्भविशेषणम् । परमसमर्थत्वात् सर्वस्वामित्वाद्युक्तं

तदिति भावः । प्रीणाति प्राणाद्याहुतिभिः प्रीणातु । एतादृशः पुरुषस्तर्पयति ।।

**सा.आ.–** इदानीं सर्वभोक्तारं परमेश्वरं तृप्तं प्रार्थयते ।। **अङ्गुष्ठेति** । अङ्गुष्ठमात्रः अङ्गुष्ठपरिच्छिन्नः । प्रमाणे द्वयसजिति मात्रच्-प्रत्ययः । अङ्गुष्ठं चाङ्गुष्ठपरिच्छिन्नं हृदयाकाशं समाश्रितः । एतेनापरिच्छिन्नेश्वरस्याङ्गुष्ठमात्रत्वं हृदयाकाशापेक्षयेत्युक्तं भवति । ईशो नियन्ता । प्रभुः स्वामी समर्थो वा । विश्वभुक् प्रीणाति । लेट् । प्राणाद्याहुतिभिः प्रीणातु । यत्तु पुरुषोऽयं जीव ईशेत्यादिविशेषणानि तु स्वीयवास्तवरूपाभिप्रायेणेति माधवस्तन्न । शब्दादेव प्रमित इति ब्रह्मसूत्रविरोधात् । प्रमितोऽङ्गुष्ठपरिच्छिन्नो न जीवः किन्त्वीश्वरः ईशादिशब्दादिति तदर्थः । किञ्चैवं सति कपिलाभिमतो निरीश्वरवाद एव त्वयाऽभ्युपेतः स्यात् सृष्टिवाक्यानां मुक्तजीवपरतया यः सर्वज्ञ इत्यादिवाक्यानां स्वीयवास्तवरूपाभिप्रायेण त्वद्रीत्या योजनासम्भवात् । तथा च कपिल ईश्वरासिद्धेरिति सूत्रयित्वा तदुत्तरेण मुक्तस्य प्रशंसा उपासासिद्धैश्वर्यस्य वेति सूत्रेण यः सर्वज्ञ इत्यादिश्रुतीनां गतिमचिन्तयत् । अकर्तुरसङ्गस्येश्वरस्य मायाकृतं विश्वस्रष्टृत्वं सर्वज्ञत्वं च वदतस्तव तत्सर्वं मायायामेव पर्यवस्यति । माया च प्रकृतिश्चैकोऽर्थः। इत्येषा दिक् । अङ्गुष्ठमात्र इति श्रुतिमूलैषा, स्मृतिः- एको विष्णुर्महद्भूतमिति ।। अ०७१ ।।

**वाङ्म आसन् । नसोः प्राणः । अक्ष्योश्चक्षुः । कर्णयोः श्रोत्रम् । बाहुवोर्बलम् । ऊरुवोरोजः । अरिष्टाविश्वान्यङ्गानि तनूः । तनुवा मे सह नमस्त अस्तु मा मा हिंसीः ।। अ० ७२ ।।**

**धी.ती.**– मे वाचो वागादयो वचनादिशक्ता आसन् । नसोः प्राणस्य त्वं प्राणः प्राणनशक्तिप्रदः । अक्ष्योः अक्ष्णोश्चक्षु-र्दर्शनशक्तिप्रदः । हे पुरुष त्वं मे कर्णयोः श्रोत्रं श्रवणशक्तिप्रदो, बाव्होर्बलं भुजयोर्बलप्रदः । ऊर्वोरोजः गमनसामर्थ्यदः । एतादृशस्त्वं मे तनूः विश्वान्यङ्गानि समस्तावयवादीनि च तनुवा सह अरिष्टा अरिष्टानि शुभानि क्षेमयुक्तानीति यावत् । कुर्विति शेषः । ते नमोऽस्तु । मां मा हिंसीः ॥

**सा.आ.**– वाक् वागिन्द्रियं मे आसन् आस्येऽनेनान्नेन स्व-व्यापारसमर्था । अस्त्विति शेषः । पद्दन्नित्यास्यशब्दस्यासन्नादेशः । एवमुत्तरत्र । नसोः नासिकापुटयोः । अक्ष्योः गोलकयोः । चक्षुः इन्द्रियम् । कर्णयोः शुष्कुल्योः श्रोत्रम् इन्द्रियम् । ओजः शत्रु-पराभिभवानुकूलः अभिघातसहानुकूलश्च शक्तिविशेषः । विश्वान्यङ्गानि तनूः तनुं च । बहुवचनं पूजार्थे । अरिष्टा अरिष्टानि कल्याणानि । व्याप्नुवन्त्विति शेषः । यद्वा तनूरित्यूकारान्तं प्रथमैकवचनम् । एतान्यरिष्टानि सन्त्वित्यर्थः । मे तनुवा तन्वा सह ते नमोऽस्तु साष्टाङ्गप्रणामोऽस्तु ॥ अ० ७२ ॥

**वयः सुपर्णा उपसेदुरिन्द्रं**
**प्रियमेधा ऋषयो नाथमानाः ॥**
**अपध्वान्तमपोर्णुहि पूर्धि चक्षु-**
**र्मुमुग्ध्यस्मान्निधयेव बद्धान् ॥ अ० ७३ ॥**

**प्राणानां ग्रन्थिरसि रुद्रो मा विशान्तकः ॥**
**तेनान्नेनाप्यायस्व ॥ अ० ७४ ॥**

**नमो रुद्राय विष्णवे मृत्युर्मे पाहि ।। अ० ७५ ।।**

**धी.ती.–** ज्ञानार्थमज्ञानबन्धादिनिवृत्त्यर्थमृषिभिः कृतं वेदव्यास-प्रार्थनारूपमन्त्रमाह ।। **वय इति** । सुपर्णः शोभमानपक्षोपेतो वयः पक्षिरूपः । प्रियमेधाः प्रिया मेधा येषां ते तथोक्ता ऋषयः कालत्रयदर्शिनो नाथमाना याचमाना इन्द्रं ददृशे । इन्द्रं दीप्ति-मत्त्वादिति ऋग्भाष्योक्तेः । दृशा सर्वदर्शित्वेनेन्द्रशब्दवाच्यं व्यास-मुपसेदुः उपसत्तिं कृतवन्त इत्यर्थः । कथं याचमाना इत्यत आह ।। **अपध्वान्तमित्यादिना** । मरणे ध्वान्तमज्ञानाख्यतिमिरं अपोर्णुहि परिहरेत्यर्थः । चक्षोः पदार्थव्यञ्जकत्वाच्चक्षुश्शब्दवाच्यं ज्ञानं पूर्धि पूरय । निधयेव प्राशेनेव । प्राशो वै निधेति निरुक्तेः । त्रिगुणात्मक प्रकृत्या बद्धान् । यथा पाशेन पशून् बध्नन्ति तथा प्रकृत्या बद्धा-नस्मान्मुमुग्धि मोचयेत्यर्थः । 'सुपर्णा ऋषयो व्यासं नाथमाना ययुः सदा । ध्वान्तं निवारयास्माकं मुमुग्धीति च वादिन' इत्येकादश-तात्पर्यवचनात् ।

हृदयाभिमर्शनमन्त्रमाह ।। **प्राणानामिति** । हे हृदयाकाशस्थ हरे । त्वं प्राणानां प्राणापानादिमुख्यप्राणरूपाणां नागकृकलासादिदासप्राणानां चक्षुरादीन्द्रियाणां च ग्रन्थिरसि आश्रयोऽसि । रुद्रशब्दवाच्योऽसि त्वम् । अन्तको दुःखाज्ञानादिनाशको, मां विश मच्छरीरे प्रविष्टो भव । तेन प्राणाहुत्यादिपूर्वकं भुक्तान्नेनाप्यायस्व वर्धय । नमो रुद्राय रुग्द्रावणाद्रुद्रशब्दवाच्याय विष्णवे परमात्मने नमः । त्वं मे मृत्युं परिहृत्य मां पाहीत्यर्थः ।।

**सा.आ.–** सुपर्णाः सुपक्षा वयः पक्षिणो भूत्वा । विशब्दात्पक्षिवाचिनः प्रथमाबहुवचनम् । प्रिया मेधाय येषां नाथमाना

याचमाना इन्द्रं परमेश्वरमुपसेदुः प्रापुः । याचनाविषयमर्थमाह ।। **अपेति** । ध्वान्तमज्ञानमपोर्णुहि निराकुरु । चक्षुर्ज्ञानं पूर्धि पूरय । निधयै सर्वगुणनिधये तुभ्यमवबद्धान् बद्धहृदयान्मुमुग्धि सुन्दररूपप्रदर्शनेन मोहय । यद्वा अवबद्धान् संसारावबद्धानस्मान् निधये निधिसदृशमोक्षप्राप्तये मुमुग्धि शोकार्णवान्मोचय । प्राणानां ग्रन्थिरसि आधारोऽसि । रुद्र उग्रोऽन्तको भूत्वा मा विश । मामिति अस्मानिति शेषः । तेनाहुतिरूपेण रुद्राय विष्णवे उग्ररूपाय विष्णवे मृत्युः मृत्योः ।। अ.७३-७५ ।।

**त्वमग्ने द्युभिस्त्वमाशुशुक्षणिस्त्वमद्भ्यस्त्वमश्मनस्परि । त्वं वनेभ्यस्त्वमोषधीभ्यस्त्वं नृणां नृपते जायसे शुचिः**
**।। अ.७६ ।।**

**धी.ती.–** अथ पुनरप्यन्तर्गतभगवन्तं स्तुवन्ति । **त्वमग्न इति** । हे अग्ने त्वमाशुशुक्षाणिः आ सम्यक् शुशुक्षणिः शोषणेच्छावान् । त्वमद्भ्य उदकेभ्यस्त्वमश्मनो माणिक्येभ्यस्त्वं वनेभ्य एकदेशस्थनानावृक्षसमुदायेभ्य ओषधीभ्यश्च त्वं द्युभिः अधिकोऽसि । हे नृपते मनुष्योपलक्षितसर्वस्वामिन् । नृणां शुचिः शुद्धिप्रदोऽतो ममापि शुद्धिं देहीत्यर्थः ।।

**सा.आ.–** हे अग्ने परमेश्वर वा । त्वं द्युभिः द्युभ्यः परिवर्जयित्वा वर्जितः परिवर्जने जायसे । आशुशुक्षणिः आशुशुक्षणेः परि । अग्नेर्वर्जयित्वा । यद्वा त्वं द्युभिः कान्तिभिर्युक्तोऽसि । आशुशुक्षणिनामाऽसीत्यर्थः । अबादिपदं तत्कृतलेपपरम् । एवमग्ने । पञ्चभूतसम्बन्धवर्जित इति तात्पर्यम् । त्वं नृणां मध्येऽत एव शुचिः एवं विधो जायसे । अग्निपक्षेऽबादिषु त्वं नासीत्यर्थः ।।अ० ७६।।

**शिवेन मे सन्तिष्ठस्व । स्योनेन मे सन्तिष्ठस्व । सुभूतेन मे सन्तिष्ठस्व । ब्रह्मवर्चसेन मे सन्तिष्ठस्व । यज्ञस्यर्धिमनु सन्तिष्ठस्वोपते यज्ञ नम उप ते नम उपते नमः ।। अ० ७७ ।।**

धी.ती.– अथ यज्ञनामानं विष्णुं नमस्कृत्य स्वाभिष्टमर्थयते ।। शिवेनेति । हे यज्ञ शिवेन कल्याणेन मे मयि सन्तिष्ठस्व सम्यक् स्थितो भव । स्योनेन सुखेन सह । सुभूतेन शोभनेन विप्रादि जन्मना । स्वं स्थापय मयि ज्ञानजन्मसिद्धिर्यथा स्यात्तथा कुर्वित्यर्थः । ब्रह्मवर्चसेन । विभक्तिव्यत्ययश्छान्दसः । ब्रह्मवर्चसं मयि स्थापयेत्यर्थः यज्ञस्यर्धिं देवपूजावृद्धिं मयि सन्तिष्ठस्व मयि स्थिरीकुर्वित्यर्थः । उपते । उः शम्भुरिति वचनात् उः शम्भुस्तस्य पते स्वामिन् यज्ञ यज्ञभोक्तृत्वाद्यज्ञनामक । उप सर्वाधिकहरे ते नमो नमः। उप समीपे विद्यमानाय ते नम इति । बहुवारोक्तिरादरार्था ।।

सा.आ.– यज्ञस्यर्धिं यज्ञस्य समृद्ध्या सह । तृतीयार्थ इत्यनोः कर्मप्रवचनीयसंज्ञा । यज्ञ विष्णो । यज्ञो वै विष्णुरिति श्रुतेः । उपते नम इति त्रिरुक्तिरादरार्था । अन्यत्स्पष्टम् । प्रसिद्धाग्निपरत्वे तु अबादीन्वर्जयित्वा सर्वेषु तिष्ठसि । तत्रापि नृणामुदरे शुचिर्जायसे । शुद्धान्नभक्षणात् । यज्ञेत्यस्य यज्ञसाधनाग्ने इत्यर्थः ।

केचित्तु अपिधानमसीत्यारभ्य समानमित्यन्तो हुतानुमन्त्रणमन्त्रः । अङ्गुष्ठमात्र इति मन्त्रो भुक्त्वाऽङ्गुष्ठप्रक्षालनमन्त्रः । वाङ्म इत्यादिस्तत्तदिन्द्रियालम्भनमन्त्रः । वयः सुपर्णा इति भुक्त्वा चक्षुषि जलसेकमन्त्रः । प्राणानामिति हृदयालम्भनमन्त्रः । त्वमग्न इति जाठराग्निप्रार्थनामन्त्र इत्याहुः ।। अ० ७७ ।।

सत्यं परं पर॒ सत्यं सत्येन न सुवर्गाल्लोकाच्च्यवन्ते कदाचन सता॒ हि सत्यं तस्मात्सत्ये रमन्ते ॥ १ ॥

तप इति तपो नानशनात्परं यद्धि परं तपस्तद्दुर्धर्षं दुराधर्षं तस्मात्तपसि रमन्ते ॥ २ ॥

दम इति नियतं ब्रह्मचारिणस्तस्माद्दमे रमन्ते ॥ ३ ॥

शम इत्यरण्ये मुनयस्तस्माच्छमे रमन्ते ॥ ४ ॥

दानमिति सर्वाणि भूतानि प्रश॒ सन्ति दानान्नातिदुश्चरं तस्माद्दाने रमन्ते ॥ ५ ॥

धर्म इति धर्मेण सर्वमिदं परिगृहीतं धर्मान्नातिदुष्करं तस्माद्धर्मे रमन्ते ॥ ६ ॥

प्रजन इति भूययांसस्तस्माद्भूयिष्ठाः प्रजायन्ते तस्माद्-भूयिष्ठाः प्रजनने रमन्ते ॥ ७ ॥

अग्नय इत्याह । तस्मादग्नय आधातव्या अग्निहोत्रमित्याह तस्मादग्निहोत्रे रमन्ते ॥ ८ ॥

यज्ञ इति यज्ञो हि देवा दिवं गतास्तस्माद्यज्ञे रमन्ते ॥९॥

मानसमिति विद्वा॒ सस्तस्माद्विद्वां स एव मानसे रमन्ते ॥ १० ॥

न्यास इति ब्रह्मा ब्रह्मा हि परः परो हि ब्रह्मा तानि

**वा एतान्यपराणि परांसिन्यास एवात्यरेचयद्य एवं वेदेत्युपनिषत् ॥ ११ ॥ अ० ७८ ॥**

**धी.ती.–** योग्यानां मुमुक्षूणां ज्ञानादिना साधनमत्र मन्त्रविहितोत्तमधर्मापेक्षयाऽत्युत्तमत्वं सन्न्यासधर्मस्य वक्तुं सत्याद्युत्तमत्वमाह ॥ **सत्यमिति** । सत्यं प्रमाणदृष्टस्यार्थस्य यथावद्वचनं परं ज्ञानसाधनेषूत्कृष्टम् । तत्रादरातिशयजननार्थं परं सत्यमिति वचनम् । यद्वा परं परं ब्रह्म । सद्भावप्रापकत्वात्सत्यं । 'सद्भावं यापयति प्रापयतीति सत्यो भगवान्' इतीशावास्यभाष्यटीकोक्तेः । सत्येन यथार्थवचनेन परब्रह्मधामप्रसादेन च स्वर्गाल्लोकात्कदाचन कदाचिदपि न च्यवन्त इति हि प्रमाणप्रमितम् । प्रसादत्वाद्धाम विष्णोः स्वर्गलोकः प्रकीर्तित इति । हि यस्मात्कारणात् सतां सज्जनानामेव सत्यवचनं ब्रह्मप्रसादश्च । तस्मात्सत्यमेव ज्ञानद्वारा मोक्षसाधनमिति तत्र रमन्ते केचन सन्त इत्युक्तं भवति ।

तीर्थयात्राजपादिरूपाणि यद्यपि तपांसि बहूनि सन्ति । तेष्वनशनकृच्छ्रचान्द्रायणादिरूपात्तपसः परमुत्तममस्ति यत्तदनशनरूपमेकादश्युपवादसादिकं तपोऽस्ति । तद्दुर्धर्षं सोढुमशक्यं, दुराधर्षं दुःखेनापि आ सम्यक् सोढुमशक्यम् । तस्मात्केचन तादृशतपसि रमन्ते ।

दमो वागादीन्द्रियाणां दुर्विषयेभ्यो निग्रहः । दम इन्द्रियनिग्रह इति वचनात् । स एवोत्तमो ज्ञानद्वारा मोक्षसाधनेष्विति मन्यमाना नैष्ठिकब्रह्मचारिणो नियतं सर्वदा कुर्वन्ति । तस्मात्केचन दमे रमन्ते ।

शमोऽन्तःकरणस्य क्रोधादिदोषराहित्यम् । बुद्धेर्भगवन्निष्ठता च । शमो मन्निष्ठता बुद्धेरिति वचनात् । स एव ज्ञानद्वारा

मोक्षसाधनेषूत्तम इत्यरण्ये वानप्रस्थाश्रमिणो मुनयो मन्यन्ते । तस्मात्ते शमे रमन्ते ।

गोभूहिरण्यादीनां स्वीयानां स्वत्वत्यागपूर्वकं परस्वत्वापादनं दानम् । तदेव ज्ञानद्वारा मुक्त्यै प्रधानसाधनमिति सर्वप्राणिनः प्रशंसन्ति स्तुवन्ति । दानान्नातिदुश्चरं दानापेक्षयाऽतिशयेन दुष्करमन्यन्नास्ति । धनार्थं प्राणानपि दुस्त्यजांस्त्यजन्ति । यं क्रीणात्यसुभिः प्रेष्ठैस्तस्करः सेवको वणिगित्युक्तेः । तस्मात्सर्वेऽपि धनिनो दारागोभूहिरण्यादिप्रदाने रमन्ते ।

श्रुतिस्मृतिपुराणादिविहितो धर्मः । स्नानसन्ध्याजपपूर्ताराम-निर्माणादिरिह विवक्षितः । दानयज्ञाग्निहोत्रादेः पृथगुक्तेः । स एवोत्तमो ज्ञानद्वारा मोक्षहेतुरिति प्रभवो धनिनश्च मन्यन्ते । तेन धर्मेण सर्वमिदं जगत्परिगृहीतम् । तादृग्धर्माद्दुस्तरमन्यन्नास्ति । तस्माद्धर्मे रमन्ते धार्मिकाः प्रभवः ।

प्रजननं धर्मपत्न्यामपत्योत्पादनमुत्तमध ज्ञानद्वाराऽपवर्गादिसाधनमिति बहवः पण्डितसाधारण्येन मन्यन्ते । नापुत्रस्य हि लोकोऽस्तीति श्रुतेः सर्वैरप्यतिशयेन पुत्रार्थं प्रयतनाच्च । तस्मादेकस्य भूयिष्ठा बहवः पुत्राः प्रजायन्ते । एष्टव्या बहवः पुत्रा यद्येकोऽपि गयां व्रजेदिति श्रुतेः। तस्माद्भूयिष्ठा बहवो जनाः प्रजनने रमन्ते ।

अग्नयो गार्हपत्यादय आधातव्याः संस्कृता उत्तमा ज्ञानद्वारा मुक्तिहेतव इति कथञ्चित्कर्मनिष्ठो गृही प्राह । तस्माद्गृहस्थैरग्नय आधातव्या आधानेन संस्कर्तव्या इत्यर्थः । तस्मादाधानसंस्कृताग्निषु त्रयीविद्या । रमन्त इत्यनुषङ्गः । आहितेष्वाग्निषु सायंप्रातश्चानुष्ठेयो

होमोऽग्निहोत्रं तदुत्तमं ज्ञानद्वारा मोक्षसाधनमित्यपरस्त्रैविद्यः कश्चिदाह । तस्मात्केचिद्याज्ञिका अग्निहोत्रे रमन्ते ।

दर्शपौर्णमासज्योतिष्टोमादिको यज्ञ उत्तमो हेतुरित्यपरे मन्यन्ते । तस्मादिदानीन्तना अपि देवाः पूर्वानुष्ठितेन दिवं गताः स्वर्गलोकं प्राप्ताः । तस्मात्केचन वैदिका यज्ञे रमन्ते ।

योगशास्त्रविदो मनसैव निष्पाद्यं मानसं ध्यानादि तदेवोत्तमं स्थानमिति मन्यन्ते । तस्मात्केचन योगिनो मानस उपासनादावेव रमन्ते । ध्यानं मानसी क्रियेति वचनात् । यद्वा मानसं मनःकृतं भगवति मनःप्रणिधानम् इति यावत् । विद्वांसो ज्ञानिनो विनयादिकमुत्तमस्थानमिति मन्यन्ते ।

कर्मकाण्डोक्ताशेषकर्मणां सङ्गफलत्यागपूर्वकं भगवदर्पणबुद्ध्याऽनुष्ठानं न्यासो निवृत्तकर्मानुष्ठानमिति यावत् । स एवोत्तमो ज्ञानद्वारा मोक्षहेतुरिति ब्रह्मा चतुर्मुखो मन्यते । स च ब्रह्मा परः परब्रह्मणोऽन्यस्तदुत्पन्नस्तच्छिष्यः सर्वजीवोत्तमश्च । तदुक्तं श्वेताश्वतरोपनिषदि । यो ब्रह्माणं विदधाति पूर्वं यो वै वेदाच प्रहिणोति तस्मा इति । सत्त्वादधीमो नामेति च । अन्यत्र परो हि ब्रह्मेति । पुनरुक्तिस्तात्पर्यग्राहिका, उक्तार्थे प्रमाणसूचिका च । तानि पूर्वोक्तसत्यादीति मानसान्तान्येकादशस्थानानि सन्न्यासापेक्षयाऽवराणि निकृष्टानि । न्यास एक एव तान्यरेचयत् अतिक्रान्तवान् । साधनेष्वपि तारतम्यविश्रान्त्यधिष्ठानमित्यर्थः । य एवं सन्न्यासस्य भगवदर्पणबुद्ध्या निवृत्तकर्माधिष्ठनस्योत्तमत्वं वेद जानाति । तदुपनिषदत्यन्तं रहस्यम् ।

**सा.आ.–** सत्यं परं द्विरुक्तिः श्रैष्ठ्यदार्ढ्यार्था । सतां सत्यम् ।

बलमिति शेषः । यद्वा सत्यं श्रेष्ठमिति सतां मतमित्यर्थः ।। **तप इतीति** । तप एव श्रेष्ठमिति केचिदित्यर्थः ।। **अनशनादिति** । अनशनं शास्त्रविहितमल्पमशनं विवक्षितम् । न तु सर्वथाऽनशनं प्राणधारणा-सम्भवात् ।। **यद्धि परमिति** । अनशनमित्यर्थः । दुर्धर्ष-मित्येतद्विवृणोति ।। **दुराधर्षमिति** । सोढुमशक्यमित्यर्थः । तपसि रमन्ते । वनिन इति शेषः ।। **दम इतीति** । दम एव श्रेष्ठ इति केचिदित्यर्थः । तस्माद्ब्रह्मचारिणो नियतं दमे रमन्त इत्यन्वयः । दमो बहिरिन्द्रियनिग्रहः ।। **शम इतीति** । शम एव श्रेष्ठ इति केचिदित्यर्थः । तस्मादरण्ये मुनयः शमे रमन्त इत्यन्वयः । ग्रामे जनसम्मर्दादिना चित्तैकाग्र्यासम्भवात् । शमोऽन्तःकरणनिग्रहः । सर्वाणि भूतानि दानं श्रेष्ठमिति प्रशंसन्तीत्यन्वयः । दुश्चरं दुर्गममथ । दानेन सर्वं धनकलत्रादि प्राप्तुं शक्यमित्यर्थः । दाने रमन्ते । सर्वाणि भूतानीति शेषः ।। **धर्म इति** । धर्मः श्रेष्ठ इति केचिदित्यर्थः । विहितानुष्ठानं निषिद्धवर्जनं चात्र धर्मो विवक्षितः । वर्णाश्रमधर्म इति परे । यज्ञदानयोर्ब्राह्मणवसिष्ठन्यायेन पृथक् ग्रहणम् । वापीकूप-तटाकादिनिर्माणमत्र धर्म इति माधवः । धर्मेण सहायेन सर्वमिदं परिगृहीतम् । यद्यत्कर्तुमारब्धं तत्सर्वं निरन्तरायं लब्धमित्यर्थः । तदाह नातिदुष्करमिति । सर्वं सुकरमित्यर्थः । प्रजनः प्रजादिजननं श्रेष्ठमिति भूयांसो वदन्ति । यत एवं बहूनां मतं तस्माद्धेतोः सर्वेषां तदर्थमुद्योगाद्भूयिष्ठाः प्रजाः प्रजायन्त इत्यर्थः । अग्नयो गार्हपत्यादयः श्रेष्ठा इति कश्चिदृषिराह । अग्निहोत्रमाहितेष्वग्निषु सायम्प्रातः पयसा होमः श्रेष्ठ इति कश्चिदृषिराहेत्यर्थः ।। **यज्ञ इति** । यज्ञः श्रेष्ठ इति केचिदित्यर्थः । ये देवास्तेषां हि यस्माद्यज्ञः प्रियस्तस्माद्यज्ञे रमन्त इत्यर्थः । यद्वा यज्ञो देवानां प्रियत्वादायुर्घृतमितिवल्लाक्षणिको निर्देशः।

यज्ञो दर्शपूर्णमासादिः । यज्ञेन हि देवा दिवं गता इति द्रविडपाठः ।। **मानसमिति** । विद्वांसो मनसा निष्पाद्यं मननादि उपासनं वा श्रेष्ठमिति विद्वांसो मन्यन्ते ।। न्यास इति ब्रह्मा । सर्वत्यागात्मकः सन्न्यास एव श्रेष्ठ इति ब्रह्मा हिरण्यगर्भ आहेत्यर्थः । ब्रह्मोक्तमेव श्रेष्ठमिति वक्तुं पूर्ववादिभ्यो ब्रह्मणः श्रैष्ठ्यं द्रढयति ।। **परो हीत्यादिना** । वै निश्चयेन यान्येतानि सत्यादीनि परांसि पराण्युक्तानि तानि न्यासापेक्षयाऽपराणीत्यन्वयः । तस्मान्न्यास एवात्यरेचयत् सर्वस्मादधिकोऽभवत् । यद्वा ब्रह्मा न्यासप्राप्य इति मनीषिण आहुरिति न्यास इति ब्रह्मेत्यस्यार्थः । ब्रह्मस्वरूपं सम्यग्विदित्वा तच्चिन्तनप्रतिबन्धकर्मणां विधिपूर्वकस्त्यागो न्यासोऽत्र विवक्षितः । अतः सर्वत आधिक्यम् । य एवं वेद । सत्यादिन्यासान्तानाम् श्रैष्ठ्यमिति शेषः । स स्वर्गं यातीति फलं बोध्यम् । इत्युपनिषत् । इदं रहस्यमित्यर्थः ।। अ० ७८ ।।

**प्राजापत्यो हारुणिः सौपर्णेयः प्रजापतिं पितरमुपससार किं भगवन्तः परमं वदन्तीति तस्मै प्रोवाच ।। १ ।।**

**सत्येन वायुरावाति सत्येनादित्यो रोचते दिवि सत्यं वाचः प्रतिष्ठा सत्ये सर्वं प्रतिष्ठितं तस्मात्सत्यं परमं वदन्ति ।। २ ।।**

**तपसा देवा देवतामग्र आयन् तपसर्षयः सुवरन्व-विन्दन्तपसा सपत्नान्प्रणुदामारातीस्तपसि सर्वं प्रतिष्ठितं तस्मात्तपः परमं वदन्ति ।। ३ ।।**

दमेन दान्ताः किल्बिषमवधून्वन्ति दमेन ब्रह्मचारिणः सुवरगच्छन्दमो भूतानां दुराधर्षं दमे सर्वं प्रतिष्ठितं तस्माद्दमः परमं वदन्ति ।। ४ ।।

शमेन शान्ताः शिवमाचरन्ति शमेन नाकं मुनयोऽन्वविन्दञ्छमो भूतानां दुराधर्षं शमे सर्वं प्रतिष्ठितं तस्माच्छमः परमं वदन्ति ।। ५ ।।

दानं यज्ञानां वरूथं दक्षिणा लोके दातारꣳसर्वभूतान्युपजीवन्ति दानेनारातीरपानुदन्त दानेन द्विषन्तो मित्रा भवन्ति दाने सर्वं प्रतिष्ठितं तस्माद्दानं परमं वदन्ति ।। ६ ।।

धर्मो विश्वस्य जगतः प्रतिष्ठा लोके धर्मिष्ठं प्रजा उपसर्पन्ति धर्मेण पापमपनुदति धर्मे सर्वं प्रतिष्ठितं तस्माद्धर्मं परमं वदन्ति ।। ७ ।।

प्रजननं वै प्रतिष्ठा लोके साधु प्रजायास्तन्तुं तन्वानः पितृणामनृणो भवन्ति तदेव तस्या अनृणं तस्मात्प्रजननं परमं वदन्ति ।। ८ ।।

अग्नयो वै त्रयी विद्या देवयानः पन्था गार्हपत्य ऋक् पृथिवी रथन्तरमन्वहार्यपचनं यजुरन्तरिक्षं वामदेव्यमाहवनीयः सामस्सुवर्गलोको बृहत्तस्मादग्नीन्परमं वदन्ति ।। ९ ।।

अग्निहोत्रꣳसायम्प्रातर्ग्रहाणां निष्कृतिः स्विष्टꣳसुहुतꣳ-यज्ञक्रतूनां प्रायणँसुवर्गस्य लोकस्य ज्योतिस्तस्मादग्निहोत्रं परमं वदन्ति ।। १० ।।

यज्ञ इति यज्ञेन हि देवा दिवं गता यज्ञेनासुरानपानुदन्त यज्ञेन द्विषन्तो मित्रा भवन्ति यज्ञे सर्वं प्रतिष्ठितं तस्माद्यज्ञं परमं वदन्ति ।। ११ ।।

मानसं वै प्राजापत्यं पवित्रं मानसेन मनसा साधु पश्यति मानसा ऋषयः प्रजा असृजन्त मानसे सर्वं प्रतिष्ठितं तस्मान्मानसं परमं वदन्ति ।। १२ ।।

न्यास इत्याहुर्मनीषिणो ब्रह्माणम् ।। १३ ।।

ब्रह्मा विश्वः कतमः स्वयम्भु प्रजापतिः संवत्सर इति ।। १४ ।।

संवत्सरोऽसावादित्यो य एष आदित्ये पुरुषः स परमेष्ठी ब्रह्मात्मा ।। १५ ।।

याभिरादित्यस्तपति ताभिः पर्जन्यो वर्षति पर्जन्ये-नौषधिवनस्पतयः प्रजायन्त ओषधिवनस्पतिभिरन्नं भव-त्यन्नेन प्राणाः प्राणैर्बलं बलेन तपस्तपसा श्रद्धा श्रद्धया मेधा मेधया मनीषा मनीषया मनो मनसा शान्तिः शान्त्या चित्तं चित्तेन स्मृतिꣳस्मृत्या स्मारꣳस्मारेण विज्ञानं विज्ञानेनात्मानं वेदयति ।। १६ ।।

तस्मादन्नं ददन्त्सर्वाण्येतानि ददाति । अन्नात्प्राणा भवन्ति भूतानां प्राणैर्मनो मनसश्च विज्ञानं विज्ञानादानन्दो ब्रह्मयोनिः ॥ १७ ॥

स वा एष पुरुषः पञ्चधा पञ्चात्मा येन सर्वमिदं प्रोतं पृथिवी चान्तरिक्षं च द्यौश्च दिशश्चावन्तरदिशाश्च स वै सर्वमिदं जगत्सभूतꣳसभव्यं जिज्ञासक्लृप्त ऋतजा रयिष्ठा श्रद्धा सत्यो महस्वान्तपसो वरिष्ठात् ॥ १८ ॥

ज्ञात्वा तमेवं मनसा हृदा च भूयो न मृत्युमुपयाहि विद्वान् ॥ १९ ॥

तस्मान्न्यासमेषां पसामतिरिक्तमाहुः ॥ २० ॥

वसुरण्वो विभुरसि प्राणे त्वमसि सन्धाता ब्रह्मत्वमसि विश्वधृत्तेजोदास्त्वमस्यग्निरसि वर्चोदास्त्वमसि सूर्यस्य द्युम्नोदास्त्वमसि चन्द्रमस उपयाम गृहीतोऽसि ब्रह्मणे त्वा महसे ॥ २१ ॥

ओमित्यात्मानं युञ्जीत ॥ २२ ॥

एतद्वै महोपनिषदं देवानां गुह्यम् ॥ २३ ॥

य एवं वेद ब्रह्मणो महिमानमाप्नोति तस्माद्ब्रह्मणो महिमानमित्युपनिषत् ॥ २४ ॥ अ० ७९ ॥

धी.ती.– पूर्वोक्तं साधनजातं प्रपञ्चेनोपपादयितुमाख्यायिकामाह ॥

**प्राजापत्य इति** । प्रजापतेरपत्यं प्राजापत्या नामत आरुणिः, सुपर्णायाः स्त्रियोऽपत्यं सौपर्णेय एतादृश ऋषिः स्वपितरं प्रजापति-मुत्तमज्ञानसाधनबुभुत्सयोपससारोपसन्नः पितरं पप्रच्छ । भगवन्तः स्वोचितज्ञानसम्पन्ना महर्षयो ज्ञानद्वारा मोक्षसाधनेषूत्तमं साधनं वदन्ति तत् त्वं ब्रूहीति शेषः । ह प्रसिद्धम् । एवं पृष्टवते तस्मै अरुणाय प्रजापतिः प्रागुक्तसाधनानि प्रपञ्च्याब्रवीदिति क्रमेणाह ।। **सत्येनेति** । यो वायुर्भूतमानी सत्येन सद्भावप्रापकेन परमात्मना तदनुग्रहापादितसत्यवचनयथार्थविज्ञानादिना च देवत्वं प्राप्य लोकानु-ग्रहाय भगवद्भीत्या सत्यवचनेन चावाति । तथाऽऽदित्योऽपि पूर्वोक्त-सत्येन दिवि रोचते आकाशे प्रकाशते । भीषाऽस्माद्वातः पवते भीषोदेति सूर्य इति ब्रह्मवल्ल्योक्तेः । तदेतत्सत्यं परं ब्रह्म सत्यवचनं च । वाचः प्रतिष्ठा वागुपलक्षितसर्वेन्द्रियस्थिरत्वापादकमनृतस्य दूष्य-माणत्वात् । तथा सत्ये तन्नियामके भगवति च प्रतिष्ठितम् । तस्मात्सत्यं परममुत्तमं साधनं वदन्ति । सत्ये रता हरिश्चन्द्रादयः।।

अथ द्वितीयसाधनं प्रपञ्चयति ।। **तपसेति** । देवा इन्द्राग्न्यादयोऽग्रे सृष्टिकाले तपसा कृच्छ्रचान्द्रायणादिना विद्यया च देवतां देवत्व-मायन्प्राप्ताः । मनुष्याः सन्तो देवादयो भवन्तीति विद्याकर्मभ्यां पदप्राप्तिरिति चोक्तेः । तथा महर्षयः स्वानुष्ठितेन तपसाऽऽलोचन-रूपजिज्ञासया च सुवःस्वर्गमन्वविन्दन् क्रमेण लब्धवन्तः । तथे-दानीमपि शत्रुपराजयार्थं जपादिना सपत्नान् शत्रून्प्रणुदाम पराकुर्मः । तस्मिन् भगवद्विषयककृच्छ्रचान्द्रायणैकादश्युपवासरूपानशनतपसि सर्वमपेक्षितं प्रतिष्ठितम् । तस्माद्धेतोस्तपः परमं वदन्ति ।

तापसस्य तत्रापरितुष्टस्यारुणेस्तृतीयं साधनं प्रपञ्चयति ।।

**दमेनेति** । दान्ता निगृहीतेन्द्रियग्रामा ब्रह्मचारिणो दमेनेन्द्रियनिग्रहादिना किल्बिषं पापम् । पापं किल्बिषकल्मषमिति कोशात् । अवधून्वन्ति विनाशयन्ति । तथा ब्रह्मचारिणो दमेन सुवः स्वर्गमगच्छन् । स च दमो भूतानां प्राणिनां पामराणां दुराधर्षं सोढुमशक्यम् । तादृशदमे सर्वमपेक्षितं फलं प्रतिष्ठितम् । तस्मात्कारणाद्दमो ज्ञानद्वारा मुक्तिसाधनेषु परममुत्तमं वदन्ति ॥

तत्राप्यपरितोषात्तुरीयसाधनमाह ॥ **शमेनेति** । शान्ता अक्रोधनाः पुरुषाः शमेन भगवन्निष्ठबुद्ध्या शिवं मङ्गलं पुंसामाचरन्ति । तथा शमेन मुनयो मननशीला नाकमन्वविन्दन्प्राप्ताः । अन्यत्पूर्ववत् ॥

पञ्चमं साधनं प्रपञ्चयति ॥ **दानमिति** । गोभूहिरण्यादिदानं सात्त्विकम् । दातव्यमिति यद्दानं दीयतेऽनुपकारिणे । देशे काले च पात्रे च तद्दानं सात्त्विकं स्मृतमिति गीतोक्तेः । यज्ञानां वरूथं श्रेष्ठं दक्षिणादिरूपम् । अतो लोके दातारं वेदवेदशास्त्रविदो मूढाश्च सर्वेऽप्युप उपसृत्य जीवन्ति । तथा राजानः शूराणां भटानामभीप्सितवित्तादि-दानेनारातीन् शत्रूनपानुदन्त निराकृतवन्तः । ये तु प्रबला विद्विषन्ति तेऽपि दानेन तुष्टा मित्रा भवन्ति । दाने सर्वं प्रतिष्ठितं कष्टार्जित-द्रव्यदाने सर्वमभीप्सितं फलादिकं प्रतिष्ठितमाभिमुख्येन स्थितं तस्मा-द्धेतोः सात्त्विकदानं परमुत्तमं स्थानमिति वदान्या वदन्तीत्यर्थः ॥

षष्ठसाधनं प्रपञ्चेनाह ॥ **धर्म इति** । धर्मः स्नानसन्ध्याजपदेवपूजा वा कूपपतटाकादिनिर्माणरूपधर्मो विश्वस्य जगतः सर्वप्राणिजातस्य प्रतिष्ठा आश्रय इत्येतत्प्रसिद्धम् । सर्वजनानां वा येन कूपतटाकादिना विना स्नानपानाद्यसिद्धेः । तथा लोके धर्मिष्ठमतिशयेन धर्मकर्तारं

विचारयितारं वा पुरुषं प्रजाः स्वाभीष्टार्थं धर्माधर्मानिर्णयार्थं वोपगच्छन्ति तत्समीपमुपगच्छन्ति । किञ्च धर्मेण प्रायश्चित्तादिरूपेण पापमपनुदन्ति नाशयन्ति । अतः सर्वमपि फलं धर्मे प्रतिष्ठितं तस्माद्धर्मं परमं वदन्ति । स्पष्टोऽर्थः ।।

सप्तमं साधनं प्रपञ्चयति ।। **प्रजननमिति** । प्रजननं धर्मपत्न्यां प्रकृष्टपुत्राद्युत्पदनं प्रतिष्ठा स्ववंशस्थितिहेतुः । सोऽयं मनुष्यलोके पुत्रेण जय्यो नान्येन कर्मणेति श्रुतेः । नाकुमाराः प्रमोदन्त इति वचनात् । किञ्च लोके साधुप्रजायाः समीचीनधार्मिकपुत्रदुहित्रादि-रूपायास्तन्तुं **सन्ततिं** परम्परामिति यावत् । तन्वानः शास्त्र-विहितवर्त्मना विस्तारयन्पितॄणां पितामहादीनामनृणो ऋणपरिहारी भवति । एष वा अनृणो यः पुत्र इति संहितोक्तेः । तदेव धार्मिक-पुत्रत्वमेव तस्य सत्पुत्रवतोऽनृणमानृण्यम् । भावप्रधानो निर्देशः । अनृण्यसम्पादकमित्यर्थः । तस्मात्पण्डितपामरसाधारण्येन प्रजनन-मपत्योत्पादनं परमुत्तमं साधनमिति वदन्ति ।।

अथाष्टमसाधनं विस्तृत्याह ।। **अग्नय इति** । अग्नयो गार्हपत्यदक्षिणाग्न्याहवनीया इति त्रयोऽग्नयो वर्तन्ते । त एव त्रयीविद्या वेदत्रयोक्तकर्मसाधनतया वेदविहितत्वात्त्रयीविद्या उच्यन्ते । देवयानोऽग्निर्ज्योतिरिति गीतायां देवयानमार्गे प्रथमत्वादग्निर्देवयानः प्रथम इत्युक्तः । यद्वा यागद्वारा देवत्वदेवलोकप्रापकत्वादग्निर्देवयानः पन्था इति । तेषामग्नीनां मध्ये गार्हपत्योऽग्निर्ऋक् ऋग्विहितकर्माधारो ऋक्शब्दवाच्यविशेषप्राणसंयुक्तसरस्वत्यभिमन्यमानः । विशेषात्प्राण-संयुक्ता वागृगित्यभिधीयत इति, वागेव ऋक् श्रुतौ प्रोक्तेति छान्दोग्यभाष्यात् । अर्चकत्वादृक्शब्दवाच्यानिरुद्धस्वामिकश्च ।

ऋगर्चकत्वाज्जनार्दन इति शिक्षाभाष्यात् । पृथिवीप्रथनाद्धविरादि-विस्तृतेः पृथिव्याख्यो, रथन्तरम् रथन्तरं सामयुक्तश्चेति प्रशस्यते । तत्रान्वाहार्यपचनो दक्षिणाग्निर्यजुः यजुर्वेदसिद्धः । याज्यस्वरूप-प्रद्युम्नाख्यभागवद्देवत्यः । अन्तरिक्षमन्तः गार्हपत्याहवनीययोर्मध्ये ईक्षणीयोऽन्तरिक्षसञ्चारवाय्वभिमन्यमानवामदेवसामयुक्तश्चान्तः प्रशस्तः। आहवनीयस्तु सर्वहोमाश्रयत्वसाम्यात्साम सामवेदमानिप्राणदैवत्यः सर्वसमः सङ्कर्षणदेवताकश्च । प्राणः सामेति कीर्तित इति छान्दोग्य-भाष्यात् । समत्वात्सामनामक इत्यन्यत्र प्रोक्तेश्च । सुवर्गलोकः स्वर्गनिदानीभूतहविराद्याश्रयः । कार्यकारणयोर्भेदव्यपदेश औपचारिकः । सुबलागमकसङ्कर्षणदेवताकः । बृहत्सामकस्तस्मात् । एतादृश-त्वादग्नीनाम् । तानग्नीन्परमं वदन्ति त्रैविद्याः ॥

नवमं साधनं प्रपञ्चयति ॥ **अग्निहोत्रमिति** । सायम्प्रात-रनुष्ठितमग्निहोत्रं गृहाणां गृहिणां निष्कृतिः प्रायश्चित्तरूपं निरन्तरकर्तव्यं वा । किञ्चाग्निहोत्रं स्विष्टं शोभनं यागरूपं, सुहुतं त्यक्तस्य द्रव्यस्य सुष्ठ्वग्नौ प्रक्षेपरूपं च देवतोद्देशेन द्रव्यत्यागः । त्यक्तद्रव्यस्याग्नौ प्रक्षेपो होम इत्यन्यत्रोक्तेः । तच्च यज्ञानामग्न्याधानाग्निहोत्रदर्शपूर्ण-मासाग्रयणचातुर्मास्यानि निरूढप्रतिबन्धः सौत्रामणिश्चेति सप्त हविः-संस्थापको यज्ञः । क्रतुशब्दो यूपवत्सोमयागेषु रूढः । अग्निष्टोमोऽ-त्यग्निष्टोम उक्थः षोडशी वाजपेयोऽतिरात्र आप्तोर्यामश्चेति सप्त सोमसंस्थाः क्रतवः । तेषां सर्वेषां यज्ञक्रतूनां प्रायणं प्रकर्षेणायन-माश्रयोऽग्निहोत्रवतामेव यज्ञाद्यधिकारात्तस्य । तस्य सर्वप्रकृतित्वाच्च । अग्निहोत्रं सुवर्गस्य लोकस्य ज्योतिः प्रकाशकम् ॥ अन्यत्प्राग्वत् ॥

दशमसाधनं प्रपञ्चयति ॥ **यज्ञ इति** । यज्ञशब्दार्थः प्रागुक्तः ।

यज्ञेन देवा अपि प्राग्भावानुष्ठितेन यज्ञेन भगवज्ज्ञानेन च दिवं स्वर्गं गताः । विद्याकर्मभ्यां देवपदप्राप्तेरुक्तत्वात् । किञ्च यज्ञेन रक्षोघ्नादि होमेन स्वाविष्टभगवता चासुरानपानुदन्त अपनोदनं निवारणं कृतवन्तः । यज्ञेन द्विषन्तः शत्रवोऽपि मित्राः सुहृदो भवन्ति । सर्वेभ्यः कामेभ्यो ज्योतिष्टोम इति तत्कामनयाऽनुष्ठितस्य सुहृदत्वा-पादकत्वात् । अन्यत् प्राग्वत् ।।

एकादशसाधनं स्पष्टयति ।। **मानसमिति** । मनसैव निष्पाद्यं मनसोपासनादि मानसं, प्राजापत्यं प्रजापतिदेवताकं तदनुष्ठितं च । अत एव पवित्रं विशुद्धिकरम् । न हि ज्ञानेन सदृशं पवित्रमिह विद्यत इति गीतोक्तेः । मानसेन मनसैकाग्रचित्तेन मननादिना च साधु सम्यङ् निश्चयरूपं पश्यति जानाति । मननस्य निश्चयरूप-ज्ञानजनकत्वात् । मतिर्यावद्युक्त इति भाष्यात् । किञ्च मानसा ब्रह्ममानसपुत्रा मरीच्यादयः । मनस इति वर्तते । मनसा सङ्कल्प-मात्रेण ऋषयः प्रजा असृजन्त उत्पादितवन्तः । अन्यत्पूर्ववत् ।।

द्वादशं प्रधानसाधनं विविच्याह ।। **न्यास इति** । ये न्यासयुक्ताः न्यासः काम्यकर्मपरित्यागरूपः । काम्यानां कर्मणा न्यासं सन्न्यासं कवयो विदुरिति भगवद्गीतोक्तेः । तं सन्न्यासं मनीषिणः प्राज्ञा ब्रह्माणं परब्रह्मसदृशं तत्प्रतिबिम्बं तदत्यन्तप्रियं चाहुः । सारूप्य-ब्रह्मेति व्यपदेशः । प्रतिबिम्बेऽपि प्रतिबिम्बेष्वल्पसाम्यमिति वचनात् सारूप्यमस्त्येव । अतो न्यासः प्रशस्तः ।

तत्प्रतिबिम्बस्यातिमहामहिमत्वादिति भावेन महिमान्तराण्याह ।। **ब्रह्मा विश्व इति** । विश्वः पूर्णः कतमोऽतिशयितरूपः ।

मातापित्रादीन्विना स्वयमेवाभिव्यज्यमानत्वात्स्वयम्भूः । प्रजापालनात्प्रजापतिः । संवत्सराख्यकालनियन्तृत्वात्संवत्सरः । संवत्सरो वै प्रजापतिरिति षट्प्रश्नोपनिषदुक्तेः । इतिशब्दः प्रकारार्थकः । इत्यादिमहामहिमोपेतं ब्रह्म । अतस्तत्प्रतिबिम्बोऽपि तथाविध इति भावः ॥

पुनः संवत्सराख्यभगवन्महिमान्तरमाह ॥ **संवत्सर इति** । असौ प्रसिद्धः संत्वत्सरनामा पुरुषः पूर्णषड्गुणः स परमेष्ठी वैकुण्ठाद्युत्तमस्थानस्थितो ब्रह्मा आत्मा गुणपूर्णस्वरूप आदानादिकर्ता नारायण एवेत्यर्थः । ध्येयः सदा सवितृमण्डलमध्यवर्ती नारायण इति स्मृतेः।

एवं संवत्सरशब्दितस्यादित्यमण्डलस्थत्वमुक्त्वा तस्यान्नादिसर्वसर्जकत्वमाह ॥ **याभिरित्यादिना** । अयमादित्यस्तद्गतो हरिश्च स्वकीयै रश्मिभिस्तीव्रैस्तपति । तेन सन्तापेन तैः स्वरश्मिभिर्भूमिस्थं जलं गृहीत्वा पर्जन्ये तदभिमन्यमाने स्वयं पर्जन्यो भूत्वा वर्षति । तेन पर्जन्येन वर्षकेण ओषधयः फलपाकान्ता व्रीह्यादयो, वनस्पतयः पुष्पं विना फलशालिनोऽश्वत्थपनसादयश्च प्रजायन्ते प्रकर्षेणोत्पद्यन्ते । ओषधिवनस्पतिभिरन्नं प्राणिनां भोज्यं सम्पद्यते । तेनान्नेन पञ्चप्राणाद्याः पञ्चवायव एकादशेन्द्रियाणि च पुष्टा भवन्ति । तैः पुष्टैः प्राणैर्देहे बलं सम्पद्यते । बलेन तपस्तेन तपसा शास्त्रर्थेषु श्रद्धाऽऽस्तिक्यबुद्धिर्जायते । तया श्रद्धया शास्त्रार्थधारणावती बुद्धिर्जायते श्रवणजन्यं ज्ञानमुत्पद्यत इति यावत् । मेधया च तत्त्वनिश्चयेच्छारूपा मनीषा भवति । तया मनीषया मननमुत्पद्यते । मनसा मननेन तत्त्वनिश्चयद्वारा शान्तिर्भवति संशयविपर्ययपरिहारो भवतीत्यर्थः । शान्त्या च चित्तं चित्तस्वास्थ्यमेकाग्रतेति यावत् ।

जायते । तेन चित्तस्वास्थ्येन स्मृतिर्धारणारूपखण्डस्मृतिर्जायते । तया च स्मारमखण्डध्यानं जायते । तेन स्मारेण विज्ञानं भगवदपरोक्षज्ञानं वा जायते । तेन विज्ञानेनात्मानं परमात्मने निवेदयति समर्पयति । स्वस्वरूपज्ञानवांश्च भवति ॥

अन्नदानकर्तुः प्रशंसामुपसंहरति ॥ **तस्मादिति** । तस्मादन्नस्य प्राणबलादिद्वारा आत्मापरोक्षहेतुत्वादन्नदः पुरुषः सर्वाण्येतानि प्राणाद्यात्मानुभवान्तानि ददाति । तस्मादन्नदाता ज्ञानोपदेष्टा च महान् । अन्नदे सर्वभूतानीति स्मृतेः । अन्नं ब्रह्मेति श्रुतेश्च । तस्मादन्नं ददन्नु प्रसिद्धान्नदाताऽन्ननामकभगवत्तत्त्वोपदेष्टा च पुरुषः प्रागुक्तप्राणबलात्मानु-भवान्तादिसर्वाण्येतानि ददाति । अतः प्रशस्तः स एवत्यर्थः ॥

अथ तारतम्यं सूचयन्सङ्क्षेपेणान्नादिपञ्चकोशनियामकतया वारुण्याद्युक्तान्नमयादिपञ्चरूपं भगवन्तं स्मारयति ॥ **अन्नादिति** । अन्नात्प्रसिद्धान्नात् भूतानां प्राणिनां प्राणाः पुष्टा भवन्ति । यद्वा अन्नात् पाञ्चभौतिकान्नमयकोशादन्नमयनाम्नोऽनिरुद्धश्च भूतानां प्राणिनां शरीरान्तः प्राणाः प्राणमयकोशास्तन्नियामकाः प्राणमयनामकाः प्रद्युम्नरूपविशेषा भवन्ति अन्तर्विद्यन्त इत्यर्थः । तस्मान्मनः प्राणैः प्रागुक्तैर्मनः स्वास्थ्यं मननं मनोमयकोशस्तन्नियामको मनोमयनामा सङ्कर्षणश्चान्तर्भवति । तस्मान्मनसो मनः स्वास्थ्यं मननं मनोमयादितो विज्ञानं निदिध्यासनद्वाराऽपरोक्षज्ञानं भवति । विज्ञानमयकोशस्तन्नियामकविज्ञानमयाख्यो वासुदेवश्चान्तः प्रविष्टोऽस्ति । विज्ञानात्प्रागुक्तत्रितयरूपाद्ब्रह्मयोनिर्ब्रह्मप्रसादकरणत आनन्दः स्वस्वरूपाविर्भावलक्षणमोक्ष आनन्दमयकोशत-न्नियामक आनन्दमयनामा

नारायणश्च भवति । ज्ञात इति शेषः । अन्नमयादिब्रह्मोपदेशेन तद्रूपज्ञानं भवतीत्यर्थः ॥

तारतम्यं सूचनप्रकारत्वेनेत्थम् । अन्नात् अन्नोपलक्षितपृथिव्यादि-पञ्चमहाभूताभिमानिभ्यः शनिबुधपावकाख्याग्निप्रथमसुतमरुद्विघ्नेशादिभ्यः प्राणा इन्द्रियाभिमानिन इन्द्रसूर्याद्याः । उत्तमा इति शेषः । प्राणैः तृतीया पञ्चम्यर्थे । प्राणेभ्य इन्द्रियाभिमानिभ्य इन्द्रादिभ्यो मनो मनोऽभिमानिनः शेषगरुडरुद्रा उच्चा भवन्ति । मनसः प्रागुक्त-मनोऽभिमानिभ्यो विज्ञानं बुद्धितत्त्वाभिमानिनी सरस्वती विज्ञान-शक्तिकश्चतुर्मुखश्च क्रमादुत्तमौ भवतः । विज्ञानात् प्रागुक्त-विज्ञानशब्दितचतुर्मुखाद्ब्रह्मयोनिः ब्रह्मणो भगवतो नारायणस्य योनिः पत्नी । अव्यक्ततत्त्वाभिमानिनी श्रीरिति यावत् । उत्तमा भवति । तस्या आनन्दः आनन्दनामा भगवन्सर्वोत्तमो भवति । 'इन्द्रियेभ्यः परं मनो मनसः सत्त्वमुत्तमम् । सत्त्वादधि महानात्मा महतोऽ-व्यक्तमुत्तमम् । अव्यक्तात्परः पुरुषो व्यापको लिङ्ग एव च' इति कठवल्ल्युक्त्या तारतम्यज्ञानस्य मोक्षहेतुत्वादिहापि तत्सूचनं युक्तमिति भावः ॥

आदित्यस्थस्य पञ्चरूपत्वं वदन् पृथिव्यादिपञ्चात्मत्वादिमहिमान्तरा-ण्याह ॥ **स वा एष इति** । एष आदित्यमण्डलस्थतयोक्तः पुरुषः परमात्मा स वा एष पुरुषसूक्तोक्तो वै एष पुरुषोऽन्नयमया-निरुद्धादिरूपेण पञ्चधा पञ्चान्नमयादिकोशनियामकः । येनानिरुद्धादि-पञ्चरूपाणां सर्वमिदं वक्ष्यमाणपृथिव्यादिपञ्चकं प्रोतमन्तः प्रविष्टम् । किं तत्पञ्चकमित्यत आह ॥ **पृथिवी चेत्यादिना** । पृथिवी तदभिमानिनी धरा शनिश्च चशब्दाद् ग्राह्यौ । एवमुत्तरत्रापि

चशब्दादुक्ततदभिमानिदेवता ग्राह्याः । अन्तरिक्षं अन्तरिक्षमानी गणेशः । द्यौश्च द्युलोकाभिमानिनश्च दिशः प्राच्याद्याश्चत्वारस्तदधीशा-स्तदभिमानिन इन्द्रयमवरुणसोमाश्चावान्तरदिश अग्न्येयादिविदिशस्तत्स्वामिनस्तदभिमानिनोऽग्न्यादिदेवाश्चेति सर्वं प्रोतं प्रविष्टम् । न केवलं पृथिव्यादिपञ्चकमेवानिरुद्धादिपञ्चरूपिणा प्रोतं किन्तु सर्वमिदं वर्तमानं स्थावरजङ्गमात्मकं सभूतं सभव्यं भूतभविष्यत्सहितं जगच्च येन प्रोतं स वै पञ्चात्मेति पूर्वेणान्वयः । स परमात्मा केन साधनेन व्यज्यत इत्यत आह ।। जिज्ञासक्लृप्त इति । जिज्ञासया श्रवणमनन-निदिध्यासनादिरूपया क्लृप्त उत्पन्नो, ऋतेन यथार्थज्ञानेन जा प्रादुर्भूतः। जनी प्रादुर्भाव इति धातोः ऋतजा इति । सुपां सुलुगित्यादिना पूर्वसवर्णः । रयिष्ठा वित्ताभिमानिन्यां लक्ष्म्यां रयिशब्दितायां सरस्वत्यां चान्तर्यामितया वर्तत इति रयिष्ठाः । श्रद्धा आस्तिक्याभिमानिसरस्वतीस्थः श्रद्धानियामकश्च । सत्यः सद्भाव-प्रापकः सद्भिः प्राप्यश्च । महस्वान् तेजस्वीति ।

एवं प्रकारेण हृदा भक्तिश्रद्धाद्युपेतेन मनसा च तं परमात्मानं ज्ञात्वा भूयः पुनरपि मृत्युं संसारम् । हे विद्वान् । आरुणे इति प्रजापतेः सम्बोधनम् । नोपयाहि न प्राप्नुहीत्यर्थः ।।

अथ बहुप्रकारेण प्रशस्तं न्यासमुपसंहरति ।। तस्मादिति ।। तस्मात् ज्ञानद्वारा पुमर्थान्तरङ्गसाधनत्वात् । एषां सत्यादि-न्यासान्तानां मध्ये न्यासमतिरिक्तमुत्कृष्टसाधनमिति मनीषिणः ज्ञानिनः प्राहुः । अयं च न्यासः स्तुत्यर्थमुक्तः । अन्यथा सन्न्यासरहितानामपरोक्षिणां गृहस्थानां मुक्तिर्न स्यात् । न च चरमजन्मनि सर्वेषां सन्न्यासेनैव मुक्तिरिति वाच्यम् । तथा

प्रमाणाभावात् । प्रत्युत वसिष्ठवामदेवप्रियव्रतादीनां स्वस्ववर्णाश्रम-विहितधर्मज्ञानद्वारा मोक्षोक्तिव्याघाताच्च । किञ्च न ज्ञानं विना सन्यासमात्रेण मोक्षः । तमेवं विद्वानमृत इह भवति । नान्यः पन्था अयनाय विद्यते । तमेवं विदित्वाऽतिमृत्युमेतीत्यादिश्रुतिव्याकोपात् । न च सन्यासिनामेव ज्ञानम् । असन्यासीनां नारदादीनामपि महाज्ञानित्वश्रवणात् । तस्माद्योग्यानां काम्यकर्मपरित्यागिनां भगवदेक-शरणानां तत्त्वज्ञानिनां संन्यासिनामुत्तमत्वमिति भावः । तस्मान्यास-मेषां तपसामतिरिक्तमाहुः ॥

सन्यासिनां भगवत्यात्मार्पणप्रकारमाह ॥ वसुरण्व इति । वस निवास इति धातोः । सर्वत्र निवासाद्वसुः परमात्मा । अण्वः अणुपरिमाणवान् । अर्शाद्यजन्तः । विभुः व्याप्तः समर्थश्च । त्वमसि । प्राणे सन्धाता प्राणे स्थित्वा तद्धारकश्च त्वमसि । विश्वसृक् समस्तप्रपञ्चस्रष्टा च हे ब्रह्मन् त्वमसि । किञ्चाग्नेस्तेजोदाः प्रकाशदः । सूर्यस्य वर्चोदाः प्रकाशदः । चन्द्रमसो द्युम्नोदाः कान्ति-रूपद्रविणदश्च त्वमसि । तथा त्वमुपयाम गृहीतोऽसि नियमेन ज्ञातोऽसि । अतः हे आत्मन् त्वा त्वां महस उत्सवतेजोरूपाय ब्रह्मणे उपयामीति बुद्ध्या आत्मानं यजेत्समर्पयेत् ।

ॐ अनुमतम् । ओमित्यनुज्ञाक्षरमित्यन्यत्रोक्तेः । यद्वा प्रणवार्थगुणपूर्णत्वादिना आत्मानं परमात्मानं युञ्जीत आत्मनि मनोयोगं कृत्वा ध्यायेदित्यर्थः ।

उपासनं प्रशंसति ॥ एतदिति ॥ एतदात्मनि मनोयोगलक्षण-मुपासनं महोपनिषदं महद्भिर्बह्वीभिरुपनिषद्भिः प्रतिपाद्यं समस्तोप-

निषत्सु भगवदुपासनाविधानात् । देवानां ब्रह्मादीनामपि गुह्यं गोप्यम् । विद्या ह वै ब्राह्मणमाजगाम । गोपाय मां गोपाय मामिति श्रुतेः ।

यः प्रणवार्थं गुणपूर्णत्वादिप्रकारेण वेद स भगवद्गुणोत्कर्षज्ञानी ब्रह्मणो महिमानम् अभिव्यक्तज्ञानानन्दाद्यात्मकत्वरूपं महिमानं स्वयं मुक्तावाप्नोति स्वरूपानन्दाभिव्यक्तिरूपमुक्तिर्भवतीति यावत् । सन्न्यासपूर्विकान्तत्त्वविद्यामुपसंहरति ।। इत्युपनिषदिति । एवमधीत्यन्तेन ग्रन्थेन प्रोक्ता येयं विद्या सन्न्यस्य प्रणवार्थतया भगवद्ध्यानरूपा विद्या सेयमुपनिषत् रहस्यम् ।।

**सा.आ.–** सत्यादिन्यासान्तानां सोपपत्तिकं श्रैष्ठ्यं निरूपयितुमाख्यायिकामाह ।। प्राजापत्य इति । प्रजापतेरपत्यं । दित्यदित्येति ण्यः । नाम्नाऽऽरुणिः । सुपर्णाया अपत्यं सुपर्णेयः । छान्दसत्वादादिवृद्ध्यभावः । भगवन्त इति बहुवचनं पूजायाम् । सत्येन पूर्वजन्मनि कृतेन सत्यभाषणेन । रोचते प्रकाशते । सर्वं प्रतिष्ठितं सर्वं व्यवहारजातं प्रतिष्ठितम् । वाचः प्रतिष्ठा वाचो भूषणम् । देवा अग्रे पूर्वजन्मनि कृतेन तपसा देवतां देवत्वमायन्प्राप्तवन्तः । तपसा ऋषयः सुवः स्वर्गमन्वविन्दन् । तपः कृच्छ्रचान्द्रायणादि । तपस इत्यत्र ऋत्यक इति प्रकृतिभावो ह्रस्वश्च । सपत्नान् शत्रून् । न रातीः अरातीः लाभविरोधिनः प्रणुदाम निराकुर्मः । तपसि सर्वं फलजातं प्रतिष्ठितम् ।। दान्ता दमयुक्ताः पुरुषाः । किल्बिषं पापमवधून्वन्ति विनाशयन्ति । दुराधर्षं दुराधर्षः कर्तुमशक्यं । दमे सर्वं साधनजातम् । अदान्तस्य सर्वं साधनं व्यर्थमेवेति भावः । दमो दमम् । एवमग्रे ।। शान्ताः समाहितमनस्काः शिवं कल्याणं कर्म । नाकं सुखं, शमे सर्वं सर्वेन्द्रियनिग्रहजातम् ।। यज्ञानां वरूथं

यज्ञलक्षणरथस्य गुप्तिः । यतो दक्षिणा दानमिति योजना । वरूथं श्रेष्ठमिति माधवः । दानेनारातीरित्युक्तं विवृणोति ।। दानेन द्विषन्त इति दाने सर्वं फलम् । धर्मो वर्णाश्रमधर्मो विश्वस्य जगतो वर्णाश्रमविभागस्य । अतिशयेन धर्मवान्धर्मिष्ठः । उपसर्पन्ति धर्माधर्मस्वरूपनिर्णयाय । **धर्मेण पापमिति** । सम्यग्वर्णाश्रमधर्मानुष्ठाने पापक्षय इति भावः । यत्तु धर्मेण प्रायश्चित्तेनेत्यर्थः इति माधवस्तन्न । कृच्छ्रचान्द्रायणादेस्तपःपदार्थत्वेन पूर्वं त्वयोक्तत्वेन ततोऽन्यस्यैव धर्मत्वेन वक्तव्यत्वात् । किञ्च तटाकप्रपदादिनिर्माणं धर्म इति त्वयोक्तत्वेनात्र प्रायश्चित्तस्य धर्मत्वोक्तिरसङ्गता ।। **धर्मे सर्वमिति** । अर्थकामादीत्यर्थः ।। प्रजननं पुत्रोत्पादनं लोके मनुष्यलोके प्रतिष्ठा हेतुः । साधुप्रजायाः समीचीनप्रजायास्तन्तुं विस्तारं तन्वानः कुर्वाणः पितॄणां पितृपितामहादीनाम् । तस्याः साधुप्रजायाः तदेव विस्तारकरणमेव अनृणम् ऋणापाकरणम् । यत्तु तस्याः पुत्रिण इति माधवेनोक्तं तन्न । तथा सति स्त्रीलिङ्गनिर्देशानुपपत्तेः ।। अग्न्यस्त्रयोऽग्न्यः । त्रयी विद्याक्रमेण वेदत्रयात्मका । देवयानः पन्था देवलोकं प्रति गमनसाधनः पन्थाः । गार्हपत्यो ऋग्वेदात्मकः पृथिव्यात्मको रथन्तरसामात्मकश्च । अत्रोत्तरत्र चाभिमानिदेवता विवक्षिताः । बृहत् बृहत्साम ।। अग्निहोत्रमग्निषु होमः । गृहाणां गृहस्थानां निष्कृतिः सर्वपापनिष्कृतिः । यदि सायम्प्रातः स्विष्टमग्नेरिष्टं पयः सुहुतं भवति सम्यग्घुतं भवति । यज्ञक्रतूनां यज्ञो दर्शपूर्णमासादिः क्रतुरग्निष्टोमादिः प्रायणं पारम्भकं, ज्योतिः प्रकाशकम् ।। **यज्ञ इति** । श्रेष्ठ इति केचिदाहुरिति शेषः ।। **यज्ञेन द्विषन्त इति** ।। द्वेषनिवर्तनद्वारेति भावः ।। प्राजापत्यं प्रजापतिपदप्राप्तिसाधनं, मानसेन मनसा । मानसमुपासनं तद्युक्तेन मनसा ।

साधु पश्यति साधु ब्रह्म पश्यति । अतीतानागतं व्यवहितं च पश्यति योगीत्यर्थ इति माधवः । मानसा उपासनापरा ऋषयो विश्वामित्रादायः सङ्कल्पमात्रेण बव्हीः प्रजा असृजन्त । न्यास इत्याहुर्मनीषिणो ब्रह्माणं परमेश्वरं हिरण्यगर्भं वा । न्यास इत्याहुः न्यासप्राप्य इत्याहुः । 'क्रमादमुं नारद इत्यबोधि स' इतिवत्कर्मण इतिशब्देनाभिधानान्न द्वितीया । हिरण्यगर्भस्य देवतोत्तमत्वाद्वक्ष्यमाण-महामाहात्म्योपपत्तिः । ब्रह्मा विश्वादिपञ्चनामा इत्यर्थः । विशति सर्वमस्मिन्निति विश्वः । कतमः सुखतमः । स्वयमेव भवतीति स्वयम्भु । हिरण्यगर्भपक्षे स्वयं कर्मवन्धं विनेत्यर्थः । प्रजापतिः संवत्सरनामा संवत्सराभिमानी । आदित्ये भव आदित्यः । दित्य-दित्यादित्येति ण्यः । तदाह ॥ य एष आदित्य इति । स परमेष्ठी स ब्रह्मा स आत्मेत्यन्वयः ॥ आदित्यमण्डलगस्य ब्रह्मणः पर्जन्यादिद्वारा महापुरुषार्थहेतुत्वमाह ॥ याभिरिति । आदित्यः आदित्यमण्डलगो ब्रह्मा याभी रश्मिभिस्तपति ताभिरुत्सृष्टः पर्जन्यो वर्षति । अन्नेन प्राणाः । पुष्टा भवन्तीति शेषः । प्राणैर्बलं वर्धते बलेन तपः । बलेन विना तपसोऽसम्भवात् । तपसा शुद्धचित्तस्य श्रद्धा भवति । श्रद्धया मेधा शास्त्राचार्योपदिष्टार्थग्रहणं, ततो मनीषा मननेच्छा ततो मनः मननं मनसा मननेन शान्तिः विषयरागापगमः। शान्त्या च चित्तं ब्रह्मप्रवणं तेन च स्मृतिः पुनः पुनर्विजातीय-प्रत्ययानन्तरितं स्मरणं लभते । स्मृत्या स्मारं विजातीय-प्रत्ययानन्तरितं ब्रह्मचिन्तनं ध्यानापरपर्यायं लभते । ततो विज्ञानं ब्रह्मसाक्षात्कारो विज्ञानेनात्मानं वेदयति लभते । यद्वा श्रद्धा वेदान्ते विश्वासो, मेधा वेदान्तार्थब्रह्ममाने, इष्टसाधनताज्ञानं, मनीषा

ब्रह्मज्ञानेच्छा मनः कस्माच्चिदाप्ताज्जगत्कर्तृत्वादिमहामहात्म्यविशिष्ट-ब्रह्मज्ञानं, शान्तिः विषये रागापगमः । चित्तं शास्त्राचार्योपदेशतो ब्रह्मज्ञानं, श्रवणापरपर्यायं स्मृतिः, चिन्तनं मननापरपर्यायं, स्मारो ध्यानम् । इतरत्पूर्ववत् ॥

प्रसङ्गादन्नदानं प्रशंसति ॥ **तस्मादिति** । इदानीं पञ्चकोशान् पञ्चब्रह्मरूपाणि चाह ॥ **अन्नादिति** । भूतानां प्राण अन्नाद्भवन्ति वर्धन्त इति योजना । प्राणैर्मनः प्राणैः पुष्टैः श्रवणं मननं निदि-ध्यासनं च भवतीत्यर्थः । मनसश्च विज्ञानं साक्षात्कारो ब्रह्मयोनिः ब्रह्मणो हिरण्यगर्भस्य योनिः कारणम् । आनन्दः आनन्दरूपः पुरुषो विज्ञानात्प्राप्य इति योजना । तथा च श्रुत्यन्तरम् । यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम् । तदा विद्वान्पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैतीति । यद्वा ब्रह्म योनिराश्रयो यस्य स आनन्दो विज्ञानात्प्राप्य इत्यर्थः । तथा च श्रुत्यन्तरम् । ब्रह्मपुच्छं प्रतिष्ठेति । अन्नेन प्राणा इत्यादिना विज्ञानेनात्मान-मित्यन्तेन ग्रन्थेनोक्त एवार्थः पञ्चधा पञ्चात्मेति वक्तुं बलादि विहायान्नात्प्राणा इत्यादिनाऽऽनन्दो ब्रह्मयोनिरित्यन्तेन पुनरुक्तः ॥ स एष पुरुषः परमेश्वरो हिरण्यगर्भश्च पञ्चधा विश्वः कतमः स्वयम्भुः प्रजापतिः संवत्सर इति पञ्चप्रकारेणोक्तः पञ्चात्मा । अन्नप्राण-मनोविज्ञानानन्दात्मा । यद्वा विश्वादिपञ्चात्माऽन्नादिरूपेण पञ्चधेत्यर्थः। तत्रान्नादिचतुष्टयमधिष्ठानमानन्दस्तु स्वरूपमेव । येन पञ्चात्मना पुरुषेणेदं सर्वं पृथिव्यादिपञ्चकं प्रोतं व्याप्तं स स इति । एकस्य तच्छब्दस्य जिज्ञासक्लृप्त इत्युत्तरेणान्वयः । इदमित्यनेन वर्तमानं भूतमित्यतीतं भव्यमिति भावि निर्दिष्टम् । स पुरुषो जिज्ञासक्लृप्तो

जिज्ञासया विचारेण क्लृप्तो निश्चितः । ऋतजा ऋताद्वेदादभिव्यक्तो, रयिष्ठाः सदा गतिशीलो रयी आदित्यस्तत्स्थः । श्रद्धा श्रद्धादि-विज्ञानान्तलभ्यो महस्वान् तेजस्वी तपसो वरिष्ठा तपआदिलभ्या-दिन्द्रादेर्वरिष्ठः । बहुवचनं छान्दसम् । तं पुरुषं मनसा मननादिना हृदा च भक्त्या च । एवं पूर्वोक्तप्रकारेण ज्ञात्वा भूयः पुनर्विद्वान् मृत्युं नोपयाहि नोपयाति । तस्मान्न्यासं सर्वत्यागपूर्वकं ब्रह्मज्ञानं विविदिषा सन्न्यासो विद्वत्सन्न्यासो वा न्यासः । एष तपसां पूर्वोक्तानां तपआदीनामतिरिक्तमधिकमाहुर्मनीषिण इत्यर्थः । फलाधिक्यकृतमाधिक्यमिति भावः । हे आरुणे मृत्युं नोपयाहीत्यर्थ इति माधवः । तथा च श्रुतिः । न कर्मणा न प्रजया धनेन त्यागेनैकेऽमृतत्वमानशुरिति । अत्रायं विवेकः । हिरण्यगर्भज्ञानं सत्यलोकप्राप्तिद्वारा तत्र ब्रह्मज्ञानातिशयद्वारा चामृतत्वहेतुः परमपुरुष-ज्ञानं तु साक्षादमृतत्वहेतुरिति । यत्तु माधवेनोक्तं स वा एष पुरुष इति सन्न्यासिपर इति तन्न । य एष आदित्ये पुरुष इति पुरुषशब्देन प्रक्रान्तस्य ब्रह्मण एव स वा एष पुरुष इति पुरुषशब्देन परामर्शौचित्यात् । किञ्च स वा एष पुरुष इति प्रक्रान्तस्य ज्ञात्वा तमेवमिति कर्मतया विदुषश्च कर्तृतयोत्तरत्र निर्देशानुपपत्तिः ॥ पुनः परमपुरुषं ब्रह्माणं च स्तौति ॥ वसुरिति । वसति सर्वस्मिन्निति वसुः । अण्वः अणुः । अणोरणीयानिति श्रुतेः । विभुरसि व्यापकोऽसि । प्राणे मुख्यप्राणे देवोत्तमे त्वं सन्धाताऽसि शरीरादि-चेष्टकत्वलक्षणप्राणनशक्तिसन्धाताऽसि । हे ब्रह्मन् त्वं विश्वधृदसि विश्वाधारकोऽसि । तेजस्विनां पुरुषाणां तेजोदास्त्वमसि । तेजोदा इत्यस्यावृत्त्योत्तरत्राप्यन्वयः । त्वमग्निः, अग्नेस्तेजोदा असि सूर्यस्य त्वं वर्चोदाः प्रकाशप्रदोऽसि । चन्द्रमसो द्युम्नोदाः प्रकाश-

रूपधनप्रदोऽसि । उपयाम गृहीतोऽसि । सोमरूपः सन् उपयामेन मृन्मयदारुमयपात्रेण सोमयागे गृहीतोऽसि । महसे तेजोरूपाय ॐ गुणपूर्णाय त्वा तुभ्यं गन्तुम् । ध्यायामीति शेषः । गत्यर्थकर्मणीति क्रियार्थोपपदस्येति वा कर्मणि चतुर्थी । इति अनेन मन्त्रेणात्मानं मनो युञ्जीत । ब्रह्मणीति शेषः । तत्र वसुरण्व इत्यारभ्य महस ॐ इत्यन्तो मन्त्रो ज्ञेयः । अन्ये तु ब्रह्मणे इत्यादिः ॐ इत्येव वा मन्त्र इत्याहुः । एतद्वै महोपनिषदं महारहस्यं देवानां गुह्यम् । एवं पूर्वोक्तप्रकारेण यो वेद स ब्रह्मणो महिमानमाप्नोति । हिरण्यगर्भपक्षे यथाश्रुतम् । परब्रह्मपक्षे महिमानं सायुज्यं सारूप्यमिति वाऽर्थः । यथाश्रुते न ते महित्वमन्वश्नुवन्तीति श्रुतिविरोधापत्तेः । द्विरुक्तिर्दार्ढ्यार्था । इत्युपनिषत् इदं महारहस्यमित्यर्थः ।

अत्र केचित् । वीरहा वा एष देवानां योऽग्निमुद्वासयत इत्यग्न्युद्वासनलक्षणसन्न्यासस्य निषिद्धत्वाद्यावज्जीवमग्निहोत्रमिति यावज्जीवविधेश्च चत्वारो ब्राह्मणस्योक्ता आश्रमा इति स्मृतिरन्धपङ्ग्वादिविषया । अन्धस्याज्यावेक्षणासम्भवेन पङ्गोश्च विष्णुक्रमणासम्भवेन श्रौते कर्मण्यनधिकारात् । ब्रह्मचर्यं समाप्य गृही भवेत् गृहाद्वानीभूत्वा प्रव्रजेदिति जाबालश्रुतिरप्यन्धादिविषया । धृतराष्ट्रस्यान्धस्याग्निहोत्रादि तु किञ्चिदङ्गवैगुण्येऽप्यग्निहोत्रस्य महाफलस्य त्यागानौचित्याद्युक्तमिति । अत्र ब्रूमः । आत्मन्यग्नीन्समारोप्य ब्राह्मणः प्रव्रजेद्गृहाद् इति मनुनाहिताग्नेः गृहस्थस्य सन्न्यासविधानात् । कात्यायनोऽपि 'आत्मन्यग्नीन् समारोप्य वेदिमध्ये स्थितं हरिम् । ध्यात्वा हृदि त्वनुज्ञातो गुरुणा प्रैषमीरयेदिति' । किञ्चाग्निहोत्र यज्ञादिकमुक्त्वा न्यास एवात्यरेचयत् । तस्मान्न्यासमेषामतिरिक्त-

माहुरिति सन्न्यासस्य पूर्वोक्तादाधिक्यबोधनेन तदधिकारिणामेव मोक्षेच्छायामत्राधिकारासिद्धेः । न कर्मणा न प्रजया धनेनेति श्रुतौ कर्मादीनां मोक्षसाधनत्वं विस्पष्टं निषिद्धत्यागस्यैव मोक्षहेतुत्वोक्तेः । 'अतः सन्न्यस्य सर्वाणि कर्माण्यात्मावबोधतः । हित्वा विद्यां धियैवेयात्तद्विष्णोः परमं पदम्' इति भाल्लविशाखायाम् । यत्तु 'चतुर्धा भिक्षवः प्रोक्ताः सर्वे चैव त्रिदण्डिन' इत्यत्रिवचनात्सर्वे त्रिदण्डिन एवेति । तन्न । एको वा तादृशो दण्डगो बालसदृशो भवेदित्येक-दण्डस्यापि विधानात् । अत्रिवचनं तु त्रिदण्डिनोऽपि यतय इत्येवम्परम् । तथा च जाबालाः समामनन्ति । सार्ववर्णिकं भैक्ष्यचरः सामभिशस्तपतितवर्जमयज्ञोपवीतिकाममेकं वैणवदण्ड-माददीतेति । वीरहा वेति श्रुतिर्यावज्जीवश्रुतिश्च सत्यधिकारे बोध्या । अन्यथा वक्ष्यमाणानेकश्रुतिविरोधात् । तथा च जाबालाः समामनन्ति । 'कुटुम्बं पुत्रदारांश्च वेदाङ्गानि च सर्वशः । यज्ञं यज्ञोपवीतं च त्यक्त्वा गूढश्चरेन्मुनिः' इति । कठाश्च समामनन्ति । 'यज्ञोपवीतं वेदांश्च सर्वं तद्वर्जयेद्यतिः' इति । एताश्च श्रुतयो निरवकाशाः ॥ छ ॥

क्षत्रियाणां तु त्यागे गृहादित्याग एव न तु सन्न्यासः । ब्राह्मणाः प्रव्रजन्तीति जाबालश्रुतौ ब्राह्मणा इति श्रवणात् । 'चत्वारो ब्राह्मणस्योक्ता आश्रमाः श्रुतिचोदिताः । क्षत्रियस्य त्रयः प्रोक्ता द्वावेको वैश्यशूद्रयोः' इति वृद्धयाज्ञवल्क्यस्मृतेश्च । यत्तु माधवेनोक्तं ब्राह्मणः क्षत्रियो वाऽथ वैश्यो वा प्रव्रजेद् गृहादिति कौर्मात्क्षत्रिय-स्यापि सन्न्यासाधिकार इति तन्न । गृहत्यागमात्रपरतयाऽपि कौर्मोपपत्तेः । सन्न्यासी विष्णोर्लिङ्गधारी भवेत् । तथा च

बौधायनः। मुखजानामयं धर्मो यद्विष्णोर्लिङ्गधारणमिति । विष्णोर्लिङ्गं काषायवसनोर्ध्वपुण्ड्रादि । जनकादीनां ज्ञानिनां क्षत्रियाणां सन्न्यासादर्शनाच्चेत्येषा दिक् ।। अ० ७९ ।।

तस्यैवं विदुषो यज्ञस्यात्मा यजमानः श्रद्धा पत्नी शरीरमिध्ममुरो वेदिर्लोमानि बर्हिर्वेदः शिखा हृदयं यूपः काम आज्यं मन्युः पशुस्तपोऽग्निर्दमः शमयिता दक्षिणा वाग्घोता प्राण उद्गाता चक्षुरध्वर्युर्मनो ब्रह्मा श्रोत्रमग्नीत् । यावद्ध्रियते सा दीक्षा यदश्नाति तद्धविर्यत्पिबति तदस्य सोमपानं यद्रमते तदुपसदो यत्सञ्चरत्युपविशत्युपतिष्ठते च स प्रवर्ग्यो यन्मुखं तदाहवनीयो या व्याहृतिराहुतिर्यदस्य विज्ञानं तज्जुहोति यत्सायम्प्रातरत्ति तत्सिमिधं यत्प्रातर्मध्यन्दिनꣳसायं च तानि सवनानि ये अहोरात्रे ते दर्शपूर्णमासौ येऽर्धमासाश्च मासाश्च ते चातुर्मास्यानि य ऋतवस्ते पशुबन्धा ये संवत्सराश्च परिवत्सराश्च तेऽहर्गणाः सर्ववेदसं वा एतत्सत्रं यन्मरणं तदवभृथः । एतद्वै जरामर्यमग्निहोत्रꣳ सत्रं य एवं विद्वानुदगयने प्रमीयते देवानामेव महिमानं गत्वाऽऽदित्यस्य सायुज्यं गच्छत्यथो यो दक्षिणे प्रमीयते पितृणामेव महिमानं गत्वा चन्द्रमसः सायुज्यꣳसेलोकतामाप्नोत्येतौ वै सूर्याचन्द्रमसोर्महिमानौ ब्राह्मणो विद्वानभिजयति तस्माद् ब्रह्मणो महिमानमाप्नोति तस्माद् ब्रह्मणो महिमानमाप्नोतीत्युपनिषत् ।। अ०८० ।।

सह नाववतु । सह नौ भुनक्तु । सह वीर्यं

**करवावहै । तेजस्वि नावधीतमस्तु मा विद्विषावहै ।। ॐ शान्तिः शान्तिः शान्तिः ।।**

इति श्रीकृष्णयजुर्वेदीये तैत्तिरीयारण्यके श्रीमहानारायणोपनिषत्समाप्ता ।।

धी.ती.– ब्रह्मापरोक्षज्ञानिन आत्मार्पणरूपं यज्ञमभिधाय तत्साधनान्याह ।। **तस्यैवमिति** । अत्रानुवाके आद्येनाग्न्यादित्यांशेनाध्यात्मगतानामात्मादीनां यज्ञसाधन यजमानादित्वमभिधीयते । एवं प्रागुक्तप्रकारेण विदुषोऽपरोक्षिणो यज्ञस्यात्मार्पणरूपस्यात्मा स्वयं जीव एव यजमानः । आत्मार्पणे तस्य स्वातन्त्र्याभिधानात् । यज्ञे दम्पत्योः सहाधिकारात् । काऽत्र यज्ञपत्नीत्यत आह ।। **श्रद्धेति** । आस्तिक्यबुद्ध्यभावेऽर्पणायोगात् सा पत्नीत्वेनोपचर्यते । शरीरमिध्मं इध्मप्रेक्षपणवच्छरीरार्पणस्य प्राथम्यादिध्मत्वव्यपदेशः । उरो वेदिः । वक्ष्यमाणबाह्यसाधनस्थानत्वादुरसो वेदितम् । लोमानि तनूरुहाणि । बर्हिर्वेद्यां वक्षस्यास्तीर्णत्वात् । शिखा वेदो दर्भमुष्टिविशेषरूपः । हृदयं मनो यूपः । वक्ष्यमाणमन्युलक्षणपशुनियोजनस्थानत्वात् । यूपत्वं हृदयस्य मनसा हि मन्युनिग्रहः कार्यः । कामं दुर्विषयतृष्णाख्यमाज्यमाज्यस्थानीयम् । यद्वा कामो भगवदर्पणकामनारूपमाज्यम् । तपोरूपाग्निभिवर्धकत्वात् । मन्युः क्रोध एव पशुः । विशसितव्यसालक्षण्यात् । तपः कृच्छ्रचान्द्रायणादि । पापदाहकतया तपोऽग्नित्वेनोक्तम् । दमः सर्वेन्द्रियनिग्रहरूपो दमः । शमयिता यज्ञे दक्षिणारूपः । गृहकृत्यानुपपत्तिदुःखशान्तिकरत्वात् । दक्षिणा या वाक् वागिन्द्रियं जिव्हा च । होता च हविरादातृत्वसाम्यात् । प्राणः प्राणवायुस्तत्सञ्चारदेशो घ्राणश्चोद्गाता उद्गातृनामा ऋत्विक् । अत्र शमयितावाक्प्राण-शब्दैर्वाङ्नासाघ्राणानामपि ग्रहणम् । चक्षुर्मनआदिज्ञानेन्द्रियसाहचर्यात् । चक्षुरध्वर्युः । सर्वकार्यदृष्टृत्वसाम्या-

चक्षुषोऽध्वर्युत्वम् । मनो ब्रह्म ब्रह्माख्यऋत्विक् । श्रोत्रं श्रवणेन्द्रियं अग्नीत् अग्नीध्र इति ।

अथास्यानुवाकस्य द्वितीयभागेन ज्ञानिव्यापारस्य यज्ञक्रियात्वमाह ।। **यावद्ध्रियत इति** । यावत् यावत्कालं ज्ञानिनोपवासेन ध्रियते स्थीयते सा दीक्षा । यदश्नाति यद्भुङ्क्ते तद्भोज्यं भोजनक्रिया वा हविः । यत्पिबति जलादिपानं करोति तदस्य सोमपानरूपम् । यद्रमते तदुपसदः उपसदाख्यं कर्म । यत्सञ्चरति ज्ञानिनः सञ्चारोपवेशो-त्थानादिः प्रवर्ग्यं प्रवर्गाख्यं कर्म । यन्मुखं यदास्यं वर्तते तदाहवनीयोऽग्निः । आस्यमाहवनीय इति श्रुत्यन्तरसमाख्यानात् । व्याहृतिः व्याहरणमाहुतिर्हूयमानं वस्तु यदस्य ब्रह्मणो विज्ञानं तज्जुहोति । सोर्लुक् । जुहोतिः होमक्रिया । यत्सायम्प्रातश्चरति यत्कालद्वये भुङ्क्ते तत्समिधम् । यत्प्रातर्माध्यन्दिनं सायं चेति कालत्रये यान्यनुष्ठितानि कर्माणि तानि सवनानि । प्रातःसवनमाध्यन्दिन-सवनसायंसवनमिति त्रिसवनाख्यानीत्यर्थः ।

अथास्यानुवाकस्य तृतीयभागेन जीवन्मुक्तस्य समाधिकालविशेषाणां नानाविधयागरूपत्वमाह ।। **ये अहोरात्रे इत्यादि** । ये अहोरात्रे अहश्च रात्रिश्च दर्शपूर्णमासौ तत्रान्हः पौर्णमासत्वं रात्रेर्दर्शत्वं ध्येयम् । येऽर्धमासाश्च पक्षमासाः प्रसिद्धास्ते चातुर्मास्यानि ज्ञानिनामहोरात्रि पक्षमासादिष्वनुष्ठीयमानकर्मणां दर्शपूर्णमासचातुर्मास्यादिरूपत्वमनु-सन्धेयम् । ये ऋतवो वसन्ताद्यास्ते पशुबन्धो ज्ञानिनाऽनुष्ठीयमानानि पशुबन्धसमानि । ये संवत्सराश्च परिवत्सराश्चेति चकाराभ्यां पदाभ्यां वत्सरा अनुवत्सराः समुच्चीयन्ते । प्रभवादिषु षष्टिसंवत्सरेष्वेकैकपञ्चकं युगाख्यं तस्मिंश्च युगे पञ्चापि क्रमेण संवत्सरपरिवत्सरौ । यदा वत्सरानुवत्सरा व्यवह्रियन्ते तेऽहर्गणाः । एतदात्मार्पणं सत्रं

सर्ववेदसम् । आत्मात्मीयदेहेन्द्रियादिसर्वस्वदक्षिणाकमित्यर्थः । यज्ञेऽवभृथः क इत्यत आह ।। **यन्मरणमिति** । यश्चरमदेहत्यागरूपः स एवावभृथ इत्यर्थः । एतत् यावज्जीवमात्मार्पणं जरामर्यं जन्म-जरामरणात्मकमग्निहोत्राख्यं सत्रं सतां त्राणं य एवं विद्वान् एतदुपदिषदर्थज्ञानी जरामरणान्तस्य जीवनस्याग्निहोत्रत्वज्ञानी यावदुदगयने प्रमीयते मृतो भवति तदा देवानामग्न्यादिलोकाभि-मानिदेवानां महिमानं धूमादिप्रवेशतद्गतौ गतिस्तत्स्थितौ स्थिति-र्लघुत्वादिलक्षणं माहात्म्यमेव गत्वा, तदनन्तरमादित्यस्य तदन्तस्थस्य आ सम्यक् दीप्यमानस्य ब्रह्मणः सायुज्यमित्युपलक्षणम् । सायुज्य-सामीप्यसारूप्यसालोक्यं यथायोग्यं गच्छति । उत्तरत्र चन्द्रमसः सायुज्यं सलोकतामित्युक्तेः । अथ इत्यर्थान्तरेऽथशब्दः । यो दक्षिणे दक्षिणायने प्रमीयते मृतो भवति स पितॄणां पितृयानगतानां धूमादिमार्गगतानां धूमादिदेवानां महिमानं धूमादिप्रवेशतद्गतौ गति-रित्यादिरूपं महत्त्वं गत्वा प्राप्य चन्द्रमसः सायुज्यं तत्प्रवेशलक्षणं तत्सलोकतां चाप्नोति । एतौ उत्तरायणदक्षिणायनदेवयानपितृयानमार्गौ सूर्याचन्द्रमसोर्महिमानौ तौ ब्राह्मणो विद्वान् ज्ञानी । अभिजयति स्वयं प्राप्नोति । तस्मात्सूर्यादिमहिमावाप्त्यनन्तरं ब्रह्मणो महिमानं तत्सायुज्यसामीप्यसारूप्य सालोक्यमुक्तिलक्षणं सम्यगभिव्यक्तानन्द-स्वरूपत्वमाप्नोति । तस्माद्ब्रह्मण इति द्विरुक्तिः । 'अध्यायन्ते द्विरुक्तिः स्याद्वेदे वा वैदिकेऽपि वा । विचारो यत्र सज्जेत पूर्वोक्तस्यावधारणे । अनुक्तानां प्रमाणानां स्वीकारश्च कृतो भवेत् । विनिन्द्य चेतरान्मार्गान्सम्पूर्णफलता तथा ।' इति भाष्योदाहृत-वचनात्सर्वमतिमङ्गलम् ।। अ० ८० ।।

**इति श्रीकृष्णयजुर्वेदीये तैत्तिरीयारण्यके श्रीमहानारायणोपनिषद्व्याख्या श्रीधीरेन्द्रयतिकृता समाप्ता ।**

**सा.आ.–** विदुषो यज्ञमाह ।। **तस्येति** । विदुषो यज्ञस्य विद्वत्सम्बन्धिनो यज्ञस्य आत्मा जीवः । वेदः दर्भमुष्टिविशेषः । शमयिता पशुहिंसकः । दक्षिणा विष्णुभक्तिरिति शेषः शान्तिरिति वा । यावत् यावत्कालं ऊर्ध्वपुण्ड्रादिचिन्हितं शरीरं ध्रियते सा दीक्षा । उपसदो यज्ञे क्रियमाणा इष्टिविशेषाः । प्रवर्ग्यः सोमयागे प्रसिद्धः । या व्याहृतिः व्याहरणमुच्चारणम् । अस्य ब्रह्मणो विज्ञानं तज्जुहोति होम इत्यर्थः । तत्समिधं समित् ।। **यत्प्रातरिति** । प्रातःकालो मध्यान्हः सायान्हश्च सवनानि । संवत्सराः प्रभवाद्याः परिवात्सराः परिवत्सरेद्वत्सरादयः । अहर्गणा द्विरात्रत्रिरात्राद्याः । एतत् आयुः, सर्ववेदसं सत्रं सर्वस्वदक्षिणाकं सत्रम् । एतत् योगिचरितं जरामर्यं जरामरणावधि । अग्निहोत्रं सत्रं अग्निहोत्रादिसत्रान्तं विद्वान् । अयं च गृहस्थ एव न सन्न्यासी । वेदः शिखा सायं प्रातरस्तीति लिङ्गात् । कुटीचकादिर्वा । अभिजयति प्राप्नोति । तस्मादूर्ध्वम् । गत इति शेषः । ब्रह्मणः परमेश्वरस्य हिरण्यगर्भस्य वा । यद्यपि चान्द्रमसी गतिः कर्मिणो न ज्ञानिनस्तथाऽपि पुनरावृत्तौ तथा । पुनरूर्ध्वमेव गतौ तु ज्ञानिनोऽपि द्वारभूता सा गतिः । अभिजयति प्राप्नोति । महिमानमाप्नोति ।। अ० ८० ।। नारायणोपनिषदां भाष्यं राघवसूरिणा ।। बदरीनाथयोस्तुष्ट्यै कृतं केदारनाथयोः ।। १ ।।

**इति श्रीमत्पदवाक्यप्रमाणपारावारीण श्रीसावित्रीवेङ्कटाचार्यसूनु-राघवेन्द्राचार्यकृतं श्रीमहानारायणोपनिषद्भाष्यं सम्पूर्णम् ।**

**श्रीबदरीनाथार्पणमस्तु ।। छ ।। छ ।।**

**समाप्तोऽयं ग्रन्थः ।।**

# अनुक्रमणिका